**योगमन्त्रामृतद्रव्यवराद्यैः सिद्धिभाक्तनुः ।**
**हातुं नह्यन्यथा शक्या विनोक्तक्रमयोगतः ।।४०।।**

सिद्धिभाक् स्थैर्यं प्राप्तेत्यर्थः।।४०।।

न चैतत्स्वमनीषिकयैवोक्तमित्याह

**उक्तं च मालिनीतन्त्रे परमेशेन तादृशम् ।**
**सर्वमप्यथवा भोगं मन्यमानो विरूपकम् ।।४१।।**
**इत्यादि वदता सर्वैरलक्ष्यान्तः सतत्त्वकम् ।**

परमेशेन इत्यादि वदता तादृशमुक्तमिति सम्बन्धः। विरूपकमिति परसंविदावेशचमत्कारंतारतम्यात्, नतु त्यक्तरसास्वादत्वात्। सर्वैरिति उत्तानप्रायार्थवेदिभिः। इदमत्रान्तःसतत्त्वं— यदस्य स्वात्मनि शिवाहंभावाभिमानेनैव मुक्तिः, देहत्यागस्त्वनयेति। यदभिप्रायेणैवात्र

'................. **शाश्वतं पदमृच्छति।'** (**१७।२५**) इति।

---

जाता है, तो यह अवसर सम्प्राप्त हो जाता है। जीवन को अन्त की ओर सरका कर मृत्यु के अन्धकार में कूद पड़ने जैसा यह आचरण सर्वथा हेय है।।३९।।

प्रश्न करते हैं कि, जीवितान्त अर्थात् मृत्यु की ओर उत्क्रान्त होने का एक मात्र कारण भोग वैमुख्य नामक स्वारसिक कारण है। भोगोपभोग में विषय रसास्वाद से विरत व्यक्ति एक क्षण भी जीना पसन्द नहीं करता। इससे इस विषय में किसी उपदेश का भी कोई परिणाम नहीं निकलता। भूखा भोजन करे इत्यादि प्रसङ्गों में शास्त्र के प्रमाण अपेक्षित नहीं होते। यही यहाँ समझा रहे हैं—

योग साधना से, मन्त्र की सिद्धि से, अमृतपान से और श्रेष्ठ द्रव्य (रसेश्वर गुटिकादि रसायन) के सेवन तथा वर आदि प्रक्रियाओं से जो शरीर सिद्ध कर लिये गये हैं, ऐसे शरीर विना उत्क्रान्ति विधियोग के छोड़े भी नहीं जा सकते।।४०।।

यह बात स्वयम् अपनी मनीषा के आधार पर निराधार ही नहीं कही गयी है अपितु इसका आगमिक प्रामाण्य भी है। यही कह रहे हैं—

तथा

................. दीक्षोक्तं फलमश्नुते।'

इत्याद्युक्तम्।।

तस्मात्सृष्ट्यादिपञ्चविधकृत्यकारित्वाभिमान एव स्वात्मनि परं मुक्तावुपाय इत्याह

**एवं सृष्ट्यादिकर्तव्यस्वस्वातन्त्र्योपदेशनम् ।।४२।।**
**यत्सैव मुख्यदीक्षा स्याच्छिष्यस्य शिवदायिनी ।**

---

मालिनी विजयोत्तर तन्त्र में परमेश्वर शिव ने स्वयम् इस तथ्य को इसी प्रकार वर्णन किया है। भौतिक भोग को विरूप मानने वाला व्यक्ति (कैसे जीवन व्यतीत करे, इस सम्बन्ध में) सब लोगों द्वारा अलक्ष्य अन्तः सतत्त्व उपदेश किया गया है। यहाँ तीन शब्द विचारणीय हैं।

१. विरूपक शब्द— विषय रसास्वाद से विमुखता दो प्रकार से होती है। पहला प्रकार है— हम यह अभ्यास कर लें कि, यह सब व्यर्थ है, व्यामोह में डालने वाला है। दूसरा प्रकार है— परा संविद् के आवेश में आविष्ट पुरुष को जो चामत्कारिक मौलिक आनन्दरसास्वाद होता है, उसके सामने यह भोगवाद स्वयं विरूप अर्थात् फीका पड़ जाता है। इस अवस्था में विरूपक मानना स्वाभाविक हो जाता है।

२. सर्वैः— सब लोग तो इस उपदेश के अधिकारी नहीं होते, फिर भी सर्व शब्द का प्रयोग यहाँ किया गया है। इसका अभिप्राय यह है कि, कुछ ऐसे लोग होते हैं जो अर्थ को सीधे समझने की शक्ति नहीं रखते। शब्दों के अर्थों को उत्तान कर नंगा कर उनका अवगम करते हैं। इन्हीं लोगों के लिये यहाँ सर्व शब्द विनियोजित और प्रयुक्त है।

३. अलक्ष्यान्तः सतत्त्वकम्— अन्तः सतत्व का अर्थ आन्तरिक मर्म होता है। भीतरी रहस्य होता है। वह रहस्य सब को सुलभ नहीं होता। उस अर्थ को सभी परिलक्षित नहीं कर पाते। ऐसे उपदेश ही रहस्य गर्भ माने जाते हैं। वे सबकी समझ के परे माने जाते हैं।

नचैतदप्रमाणकमित्याह

**उक्तं श्रीनिशिचारे च भैरवीयेण तेजसा ।।४३।।**

**व्याप्तं विश्वं प्रपश्यन्ति विकल्पोज्झितचेतसः ।**

**विकल्पयुक्तचित्तस्तु पिण्डपाताच्छिवं व्रजेत् ।।४४।।**

---

यहाँ यह रहस्यार्थ है, विशुद्ध रूप से साधक का यह संस्कार दृढ़ हो जाय और मन में बात बैठ जाय कि, मैं ही शिव हूँ। इसी शिवाद्वय समावेश सिद्ध पुरुष की मुक्ति होती है। इस बुद्धि के आत्यन्तिक विकास के बाद देह त्याग रूप उत्क्रान्ति निषिद्ध नहीं रह जाती। इसी अभिप्राय से श्रीत. १७/२५ में कहा गया है कि,

"....शाश्वत पद प्राप्त करता है"।

अथवा

"...दीक्षा में कहे फल प्राप्त करता है"।

उक्त शैववाक्-तत्त्व के मर्म को समझकर सत्य का अनुसरण करना ही कर्त्तव्य है।।४१।।

सृष्टि आदि पाँच प्रकार के कृत्यों के कर्त्ता एकमात्र शिव हैं। मैं भी स्वयं शिव हूँ। विश्व मुझसे ही उत्पन्न हो रहा है। मुझसे उदित है, मुझमें ही प्रविलीन होता है और मुझसे अभिन्न है। इस समावेश में आविष्ट रहना ही सर्वश्रेष्ठ मुक्ति का उपाय है। यही कह रहे हैं—

इस प्रकार सृष्टि आदि पञ्चकृत्य रूपी कर्त्तव्यों में स्वात्म स्वातन्त्र्य की सक्रियता से सम्बन्धित दीक्षा के उपदेश ही प्रधान उपदेश माने जाते हैं। मुक्तिप्रद उपदेश ही उपदेश होता है। यही मुख्य दीक्षा होती है। शिष्य को शिवत्व प्रदान करने वाली दीक्षा ही मुख्य दीक्षा मानी जाती है।।४२।।

यही तथ्य निशाटन शास्त्र में व्यक्त किया गया है कि, भैरवीय तेज से यह सारा विश्व विभासित और ओत-प्रोत है। समस्त विकल्पों का परित्याग करने वाले निर्विकल्पताप्राप्त पुरुष विश्व को इसी दृष्टि से देखते हैं। जिसके चित्त

**बाह्यदीक्षादियोगेन चर्यासमयकल्पनैः ।**
**अविकल्पस्तथाद्यैव जीवन्मुक्तो न संशयः ।।४५।।**

तेजसेति पूर्णज्ञानक्रियात्मनेति, अत एवोक्तं विकल्पोज्झितचेतस इति संविदद्वैतमात्रनिष्ठा इत्यर्थः। विकल्पयुक्तचित्त इति इदानीमेव संविदद्वैतासिद्धेः। अद्यैवेति सत्यपि देह इति यावत्। तदुक्तं तत्र

**'तेजसास्य शिवस्यैव व्याप्तं सर्वं चराचरम् ।**
**पश्यन्ति मुनयः सिद्धा वीरसंज्ञाश्च देवताः ।।**
**विकल्पोज्झितचित्तास्तु पश्यन्ति भुवि मानवाः ।**
**विकल्पयुक्तचित्तस्तु पिण्डपाताच्छिवं व्रजेत् ।।**

---

में विकल्पों के संस्कार अभी पड़े हुए हैं, वे भी पिण्ड का पात होने पर अर्थात् देहान्त होने पर शिव को प्राप्त करते हैं। बाह्य दीक्षा आदि गुरुक्रम के संवर्त्तन में लगे रहकर जिसने चर्या को नियन्त्रित कर लिया है, जिसने समय के पालन रूप अनुशासन को साध लिया है, ऐसे पुरुष विश्व की वास्तविकता से परिचित हो जाते और अविकल्प भूमि पर विश्राम करने लगते हैं। वे तत्काल जीवन्मुक्त हो जाते हैं। इसमें सन्देह के लिये कोई स्थान नहीं होता।

जहाँ तक भैरवीयतेज के प्रभाव से विश्व के ओत-प्रोत होने की बात है, यह ध्यान देना चाहिये कि, वह तेज पूर्ण ज्ञानात्मक और पूर्णक्रियात्मक होता है। इसी पूर्णज्ञान के कारण साधक विकल्पमुक्तमनस्क होकर संविदद्वैत-मात्रनिष्ठ हो पाते हैं।

विकल्प युक्त चित्त में अद्वैत सिद्धि असंभव होती है। श्लोक में प्रयुक्त अद्यैव शब्द का तात्पर्य आज ही इसी क्षण इसी देह से मुक्त होना है। निशाटन की उक्ति है कि,

" शिव के ही इस तेज से सारा चराचर जगत् व्याप्त है। इस रहस्य का दर्शन केवल मुनिवृन्द, सिद्ध, 'वीर' स्तर पर पहुँचे शैव साधक और देव कर पाते हैं। जिनके चित्त विकल्पों से मुक्त हो चुके होते हैं, ऐसे मनुष्य इस मर्म को समझते हैं।

**विकल्पक्षीणचित्तस्तु आत्मानं शिवमव्ययम् ।**
**पश्यते भावशुद्ध्या यो जीवन्मुक्तो न संशयः ।।** इति।

एवं निर्विकल्पवृत्तीनां जीवतामेव मुक्तिरितरेषां तु देहपातानन्तरमिति सिद्धम्।।४५।।

ननु जीवत एव यन्न सिद्धं, तन्मृतस्य भविष्यति,— इत्यत्र किं प्रमाणमित्याशङ्क्याह

**संसारजीर्णतरुमूलकलापकल्प-**
**संकल्पसान्तरतया परमार्थवह्नेः ।**
**स्युर्विस्फुलिङ्गकणिका अपि चेत्तदन्ते**
**देदीप्यते विमलबोधहुताशराशिः ।।४६।।**

---

जिनके मन में अभी विकल्पों के संस्कार पड़े ही हुए हैं, उन लोगों को भी देहान्त के बाद शिवत्व की उपलब्धि हो सकती है। विकल्प क्षीण हो जाने पर निर्विकल्प भूमि उपलब्ध होती है। जिसके चित्त के सारे विकल्प क्षीण हो गये हैं, वह स्वात्म में शिव के अनन्य स्वरूप का दर्शन कर लेता है। भाव की शुद्धि हो जाने से वह जीवन्मुक्त ही हो जाता है, इसमें सन्देह करने की कोई बात ही नहीं है।''

इससे यह सिद्ध हो जाता है कि, निर्विकल्प वृत्ति वाले पुरुषों को जीवन में ही मुक्ति मिल जाती है। इतर अर्थात् जिनमें विकल्पों के कुछ संस्कार शेष रह जाते हैं, उनकी मुक्ति देह के अन्त होने पर ही हो पाती है।।४३-४५।।

प्रश्न बड़ा सुन्दर है, अनुभव साक्षिक है। शिष्य कहता है गुरुदेव! जो जीते जी सिद्ध नहीं हुआ, वह मरने पर सिद्ध हो जायेगा? इसमें क्या प्रमाण है? इस पर कह रहे हैं कि,

संसार एक ऐसा वृक्ष है, जो अत्यन्त जीर्ण है। बड़ा ही पुराना पेड़ है यह। पुराने पेड़ प्रायः सूखते ही चले जाते हैं। जड़ों की संख्या का कोई ओर छोर

संसार एव 'सर्वो ममायं विभवः' इत्यादिशुद्धविकल्पघुणग्रस्तत्वाज्जीर्णतरुः, तस्यावष्टम्भकतया मूलकलापप्राया ये भेदानुप्राणकत्वादशुद्धाः संकल्पास्तैर्व्यवहितत्वेन साक्षादनभिव्यक्तत्वात् पारमार्थिकस्य बोधहुताशराशेर्विस्फुलङ्गकणिकाप्राया अपि यदि समाधानादिदशासु त्वदावेशलेशा भवेयुः, तदवश्यमर्थाद्देहस्यान्ते पुनः पुनरभ्यासफूत्कारोत्तेजितः परमार्थवह्निर्देदीप्यते देहप्रमातृतादिनिर्वापणपूर्वं परप्रमातृत्वमेवात्यर्थं दीप्ततामियादित्यर्थः ।।४६।।

---

नहीं होता। संख्या में बड़ी और सूखी हुई जड़ें वैसी होतीं हैं, जैसे मनुष्य के अशुद्ध संकल्प। अशुद्ध संकल्प अर्थात् विकल्प। परमार्थ की आग से इसलिये बचे रहते हैं कि, आग से उनका व्यवधान बना रहता है।

यदि संयोग वश उस चितिवह्नि की एक छोटी चिनगारी भी उसमें पड़ जाय, तो सूखे विकल्पों की राशि राशि को भस्मसात् होते कितनी देर लग सकती है। विमलबोध रूप वैश्वानर की उद्दीप्त ज्वालायें अपने पूरे रूप में देदीप्यमान हो उठती हैं।

अचार्य जयरथ ने संसार के बूढ़े पेड़ में शुद्ध विकल्प को टाड़ा (काठ का घुन) कहा है। टाडा कीट पेड़ को और उसके तने और डालियों को भीतर ही भीतर खा कर खोखला कर देता है। इससे पेड़ की जीर्णता में भी बढ़ोत्तरी हो जाती है। जड़ें सूखती चली जाती हैं। ये जड़ें और कुछ नहीं, अपितु सांसारिक विकल्प हैं। ये भेदवाद को बढावा देते हैं।

परमार्थ संविद्बोध रूप होता है। बोध प्रकाशात्मक होता है। यह प्रकाश विकल्प की जड़ों के साथ इस सूखे और खोखले पेड़ को अपनी बोध की चिनगारियों से ही जला डालने में समर्थ होता है।

साधक के या मरने के निकट पहुँचे व्यक्ति के सौभाग्य से यदि किसी प्रेरणा से, उपदेश से संस्कारों के शुभ्र हो जाने पर कभी समाधान आदि के अवसर आ पड़ते हैं। उस समय उसमें भगवदावेश होना भी स्वाभाविक होता है।

एतदेव प्रथमार्धेनोपसंहरति

**इत्थं दीक्षोपक्रमोऽयं दर्शितः शास्त्रसंमतः ।।४७।।**

शास्त्रसंमत इति न तु स्वोपज्ञ एवेति शिवम्।

**अहिततिरोहितिविहतिप्रोन्मोषितस्वात्मपूर्णविज्ञानः ।**
**अह्वायाह्निकमेतच्चतुर्दशं जयरथः समाचख्यौ ।।**

---

उसी समय यदि देह का अन्त समय आ उपस्थित होता है और शरीर निष्प्राण हो जाय, तो तत्काल बोध का वैश्वानर जड़ों के साथ बूढ़े पेड़ को भी जलाकर खत्म कर देता है। परिणाम स्वरूप देह के अन्त समय में तत्काल परप्रमातृत्व का दीप्तिमन्त देदीप्यमान हुताशन अपनी पूरी लपटों के साथ भ्राजमान हो जाता है। विमल बोध का अर्थ, शुद्ध संविदुल्लास के साथ ही साथ चिद्विलास का चमत्कार होता है। वह स्वतः प्रकाशमान होता है। जीवन उससे प्रकाशमान होता है। अन्त देदीप्यमान होता है। और ऐसी मृत्यु भी धन्य हो उठती है।।४६।।

संचय शैली का प्रयोग यहाँ भी अन्त में ग्रन्थकार करते हैं। १४वें आह्निक के अन्त में पूरे श्लोक की पहली अर्धाली का प्रयोग कर इस आह्निक का उपसंहार कर रहे हैं। दूसरी अर्धाली पन्द्रहवें आह्निक के आदि में अवतरित की जायेगी। यहाँ कह रहे हैं कि,

इस प्रकार से दीक्षा का शास्त्रसम्मत उपक्रम यहाँ किया गया। शास्त्र सम्मत कहने का तात्पर्य है कि, मेरी ही स्वोपज्ञ ये बातें नहीं हैं। इति शिवम्।।४७।।

भव का तिरोभाव, संविद् का पूर्ण परिश्रुत बोधोत्कर्ष,
अन्धकार का ध्वंस, अकल्पित आत्मतत्त्व संस्क्रिया-प्रकर्ष।
जयरथ में प्रतिफलित चतुर्दश तन्त्रालोक-शुभाह्निक आज,
व्याकृत कर अर्पित करता है, ले, प्रसन्न हो सुधी समाज।।

इति श्रीमन्महामाहेश्वराचार्यवर्यश्रीमदभिनवगुप्तविरचिते
श्रीमद्राजानकजयरथकृतविवेकाख्यव्याख्योपेते
**श्रीतन्त्रालोके दीक्षोपक्रमप्रकाशनं**
**नाम**
**चतुर्दशमाह्निकम्।।१४।।**

---

हंसः पिबन् परमहंसहितं पराम्बा-
पादारविन्द मकरन्द रसं रसज्ञः ।
व्याख्यात् चतुर्दशकलं क्रमिकन्तु तन्त्रा-
लोकाह्निकं प्रमुदितात्र सरस्वती स्यात्।।

**श्रीमहामाहेश्वराचार्यवर्यश्रीमदभिनगुप्तपादविरचित**
**श्रीमद्राजानकजयरथकृतविवेकव्याख्योपेत**
**डॉ. परमहंसमिश्रविरचित-नीरक्षीरविवेक**
**हिन्दीभाषाभाष्य-संवलित**
**श्रीतन्त्रालोक**
**का**
**दीक्षोपक्रमप्रकाशननामक**
**चौदहवाँ आह्निक सम्पूर्ण।।**

।। शुभं भूयात् ।।

अथ

# श्रीतन्त्रालोके

श्रीमदभिनवगुप्तपादाचार्यविरचिते
श्रीजयरथकृतविवेकाख्यव्याख्योपेते

## पञ्चदशमाह्निकम्

यः परमेशसपर्याक्रियोपदेशाङ्कुशेन भवकरिणम् ।
कृतवाननतिबलमतिबलमस्मि नतः फणभृदाभरणम् ।।

इदानीं नित्यकर्माद्यात्मकं यजनं निरूपयितुं द्वितीयार्धेन प्रतिजानीते

---

श्रीमन्महामाहेश्वराचार्यवर्यश्रीमदभिनवगुप्तपादाचार्यविरचित
श्रीराजानक जयरथकृतविवेकाभिख्यव्याख्योपेत
डॉ. परमहंसमिश्रकृत-नीर-क्षीर-विवेक-
हिन्दीभाष्यसंवलित

# श्रीतन्त्रालोक

## पञ्चदश आह्निक

परमेश्वर का परम उपासक परा-प्रक्रिया-योग-निदेश-
के अङ्कुश से भव गजेन्द्र को वश में कर बलवान् विशेष,
मैं बन गया, कृपा यह भव की जो भुजंग-भूषण भूतेश,
उसके चरणों में श्रद्धा नत, जयरथ, जय विकसित परिवेश।।

**अथैतदुपयोगाय यागस्तावन्निरूप्यते ।**

एतदुपयोगायेति एतस्य प्रक्रान्तस्य दीक्षोपक्रमस्य उपयोगाय तत्संपत्त्यर्थ-मित्यर्थः। दीक्षायां हि नित्याद्यात्म यजनमुपक्रमोपयोगित्वादङ्गमेतदानन्तर्येण तत्संपत्तेः। यथोक्तं

'नित्याह्निके समाप्ते तु कुर्यान्नैमित्तिकं बुधः।' इति।।

ननु दीक्षैव नाम किंप्रयोजना यदुपक्रमोपयोगायापि अङ्गतया यजनमुच्येतेत्याशङ्क्याह

**तत्र दीक्षैव भोगे च मुक्तौ चायात्युपायताम् ।।१।।**
**स्वयं संस्कारयोगाद्वा तदङ्गं तत्प्रदर्श्यते ।**

स्वयमिति साक्षादनन्यापेक्षत्वेनेत्यर्थः। संस्कारयोगादिति ज्ञानाद्यधिकृतत्वा-पादनात्मनः। तत्र दीक्षा लोकधर्मिणः साधकस्य भोगे निर्बीजस्य च पुत्रकस्य मोक्षे स्वयमुपायः, शिवधर्मिणश्च भोगे, सबीजकस्य च पुत्रकस्य मोक्षे संस्कारयोगादुपायः। अनयोर्हि दीक्षया संस्कारे कृते योगज्ञानादावधिकारो जायते येन भुक्तिमुक्ती स्याताम्। तदिति एवं भुक्तिमुक्त्युपायत्वाद्धेतोः।।१।।

---

इस समय इस नये आह्निक के सृजन सन्दर्भ में पूर्वोक्त प्रक्रियाओं की सविधि सिद्धि के लिये अत्यन्त उपयोगी, प्रतिदिन आचरणीय नित्यकर्म आदि रूप याग के निरूपण की प्रतिज्ञा संचय शैलीगत निर्मित श्लोक की द्वितीय अर्द्धाली से कर रहे हैं। शास्त्रकार कह रहे हैं कि,

अब पहले प्रक्रान्त दीक्षा के उपयोग के लिये अत्यन्त आवश्यक 'याग' का निरूपण किया जा रहा है। दीक्षा में नित्यकर्म के रूप में अङ्गीकृत यजन के उपयोग पर सर्वदा बल दिया जाता है। इसी से इसके लक्ष्य की उपलब्धि होती है। कहा भी गया है कि,

"नित्य दिनचर्या परक-प्रक्रिया की समाप्ति के अनन्तर विवेकशील शिष्य नैमित्तिक कर्म में प्रवृत्त हो" अर्थात् नित्य क्रिया शिष्यद्वारा अवश्य करणीय मानी जाती है। उसके बाद ही नैमित्तिक कर्म किये जाने चाहिये।

एतदेव ससंवादं दर्शयति

**यो यत्राभिलषेद्भोगान् स तत्रैव नियोजितः ।।२।।**

---

प्रश्न करते हैं कि, दीक्षा का प्रयोजन ही क्या है? उसी के उपक्रम के उपयोग के लिये ही तो अङ्ग रूप यजन का कथन किया जाता है। इस पर कह रहे हैं कि, भोग और मोक्ष दोनों में दीक्षा ही उपाय रूप से स्वीकृत है। कभी ऐसा भी होता है कि, स्वयं भी (श्लोक १४ के अनुसार) संस्कार के सुयोग से और क्रिया से भोग और मोक्ष की उपलब्धि होती है। यों दीक्षा महत्त्वपूर्ण, उपयोगी और जीवन के उत्कर्ष हेतु बड़े काम की वस्तु मानी जाती है। उसके अङ्गों का वर्णन भी उपयोगिता की दृष्टि से ही अनिवार्य है। दीक्षा दो तरह से उपयोगी होती है। कभी निरपेक्ष भाव से स्वयम् उपयोगी होती है और कभी सापेक्ष भाव से संस्कार के योग से उपयोगी होती है।

दीक्षा से भोग और मोक्ष की सिद्धि तो सामान्य बात है। संस्कार सम्पन्न साधक का विवेक जब जागृत हो जाता है, उस समय भी बोध के प्रकाश के समुदय में मुक्ति हस्तामलकवत् हो जाती है। ऐसे सिद्ध साधकों के समक्ष भोग तो हाथ जोड़े खड़े रहते हैं। यहाँ 'स्वयं' निरपेक्ष अर्थ में प्रयुक्त है। दीक्षा सदा गुरु सापेक्ष होती है। स्वयं ज्ञान भी महत्त्वपूर्ण होता है। निष्कर्षतः यहाँ यह स्पष्ट करना आवश्यक है कि, दीक्षा लोकधर्मी शिष्य के भोग का पथ भी प्रशस्त करती है निर्बीज पुत्रक दीक्षा उसकी मुक्ति में उपाय बनती है। शिवधर्मी शिष्य के भोग और सबीज पुत्रक के मोक्ष में संस्कार-योग से दीक्षा ही उपाय बनती है। इस तरह वह स्वयम् और संस्कार-योग दोनों तरह से उपयोगी होती है।

इन दोनों के संस्कार दीक्षा के द्वारा ही सम्पन्न होते हैं। योग की प्रक्रिया में बुभुक्षु संलग्न होता है और ज्ञान के लिये मुमुक्षु अधिकारवान् बन जाता है। इस तरह चाहे बुभुक्षु हो या मुमुक्षु दोनों के उत्कर्ष के लिये दीक्षा परम उपयोगी मानी जाती है। लेकिन स्वयं ज्ञानवान् एवं विशिष्ट साधना से संस्कार सम्पन्न साधक भी स्वतः निरपेक्ष मोक्ष का अधिकारी हो जाता है।।२।।

**सिद्धिभाङ्मन्त्रशक्त्येति श्रीमत्स्वायंभुवे विभुः ।**
**योग्यतावशतो यत्र वासना यस्य तत्र सः ।।३।।**

**योज्यो न च्यवते तस्मादिति श्रीमालिनीमते ।**
**वदन्भोगाद्युपायत्वं दीक्षायाः प्राह नो गुरुः ।।४।।**

श्रीमत्सूक्ष्मस्वायम्भुवादाविति गुरुर्वदन् दीक्षाया भोगाद्युपायत्वं नः प्राहेति समन्वयः। श्रीमालिनीमते इति प्रकान्ते। यदुक्तं तत्र

**'योग्यतावशसंजाता यस्य यत्रैव वासना ।**
**स तत्रैव नियोक्तव्यो दीक्षाकाले विचक्षणैः ।।**

---

विभिन्न शास्त्रों में इस विषय में क्या संवादित है, इसकी चर्चा करते हुए दीक्षा के उपायत्व का ही प्रतिपादन कर रहे हैं—

जो शिष्य जहाँ, जैसी वासना से वासित होकर जिस प्रकार का अभिलाष गुरु के समक्ष प्रकट करता है, गुरु द्वारा वह वहीं नियोजित किया जाता है। मन्त्र शक्ति के बल पर वहाँ उस विषय की सिद्धि वह प्राप्त कर लेता है। यह बात स्वयं परमेश्वर ने स्वायंभुवशास्त्र में व्यक्त की है।

गुरु का भी यही गुरुत्व है कि, दीक्ष्य की जहाँ वासना हो, वह वहीं योजित करे। ऐसा करने पर वह वहाँ से च्युत नहीं होता। यह बात श्रीमालिनी विजयोत्तर तन्त्र में लिखी गयी है। यह उपदेश देते हुए मेरे गुरुदेव ने यह स्पष्ट किया था कि, दीक्षा भोग मोक्ष आदि की उपाय है।

मालिनी विजयोत्तर तन्त्र अधिकार १२ श्लोक ४०-४१ में यह उक्त है कि,

"शिष्य की योग्यता के वश जहाँ जिस प्रकार की वासना उत्पन्न हो जाती है, वह वहीं नियोजित करने योग्य होता है। विचक्षण गुरुजनों का यह दायित्व है कि, दीक्षा के समय ही वह शिष्य की योग्यता के विषय में अच्छी तरह निर्णय कर ले।

**यो यत्र योजितस्तत्त्वे स तस्मान्न निवर्तते ।**

(१२/४१) इति।।४।।

एवं भोगे दीक्षायाः स्वयमुपायतामभिधाय मोक्षेऽप्याह

**न चाधिकारिता दीक्षां विना योगेऽस्ति शाङ्करे ।**
**न च योगाधिकारित्वमेकमेवानया भवेत् ।।५।।**

**अपि मन्त्राधिकारित्वं मुक्तिश्च शिवदीक्षया ।**
**इत्यस्मिन्मालिनीवाक्ये साक्षान्मोक्षाभ्युपायता ।।६।।**

**दीक्षायाः कथिता प्राच्यग्रन्थेन पुनरुच्यते ।**
**पारम्पर्येण संस्कृत्या मोक्षभोगाभ्युपायता ।।७।।**

---

इस तरह जो शिष्य जिस तत्त्व में योजित होता है, वह उस तत्त्व से निवर्तित नहीं होता''।।३-४।।

ऊपर भोग की वासना से वासित शिष्य की दीक्षा के विषय में चर्चा की गयी है। अब मोक्ष सम्बन्धिनी दीक्षा की चर्चा की जा रही है—

शङ्कर योग प्रक्रिया में दीक्षा के विना किसी की आधिकारिकता (योग्यता) नहीं मानी जाती। इसी तरह इसके विना किसी योग में भी आधिकारिकता नहीं मिलती, इसके विना मन्त्र प्रयोग का भी अधिकार नहीं होता।

मालिनी विजयोत्तर तन्त्र में यह स्पष्ट ही लिखा गया है कि, शिव-दीक्षा से मुक्ति मिलती है। इस वाक्य से साक्षात् मोक्षोपायता दीक्षा में है, यह बात सिद्ध हो जाती है किन्तु ऊपर के ५वें श्लोक में साक्षात् समर्थन नहीं किया गया, वरन् सामान्य रूप से ही योग में दीक्षा की उपायता है, यह बात कही गयी है। जिज्ञासु पूछता है कि ऐसा क्यों?

इस पर कह रहे हैं कि, पाँचवीं कारिका का भाव परम्परा से है। अर्थात् पहले दीक्षा से संस्कार शुद्धि होती है। संस्कार शुद्धि से योग आदि में अधिकार होता है। योग की सिद्धि के अनन्तर यदि मन्त्रों की ओर विशेष प्रवृत्ति या झुकाव

नन्वत्र 'मुक्तिश्च' शिवदीक्षया' इत्युत्तरेणैव ग्रन्थेन दीक्षायाः साक्षान्मोक्षोपायत्वमुक्तं, प्राच्येन पुनर्योगादावधिकारित्वमिति कथमिह एतदविशेषेणैव उक्तमित्याशङ्क्य आह प्राच्येत्यादि। पारम्पर्येणेति दीक्षया हि संस्कारः, ततो योगादावधिकारस्ततो योगसिद्ध्या मुक्तिर्मन्त्रसिद्ध्या च भुक्तिरित्युक्तं मोक्षभोगाभ्युपायतेति। तेन केषाचन संस्कारद्वारेण दीक्षा मुक्तौ भुक्तौ च हेतुरित्युक्तं स्यात्।।७।।

न केवलमेतदत्रैवोक्तं, यावच्छास्त्रान्तरेष्वपि इत्याह

**येषामध्यवसायोऽस्ति न विद्यां प्रत्यशक्तितः।**
**सुखोपायमिदं तेषां विधानमुदितं गुरोः।।८।।**

---

हुआ तो भोग और प्रत्यक्ष योग सिद्धि के बाद यदि वैराग्य प्रधान हुआ तो मुक्ति मिलती है। इस प्रकार संस्कार की प्रधानता के अनुसार ही दीक्षा भोग और मोक्ष की उपाय सिद्ध होती है।

यह बात संस्कार पर निर्भर करती है कि, एक दीक्षित की दीक्षा किसकी निमित्त हो सकती है। यों वह दोनों की हेतु है, यह निश्चय है।।५-७।।

यह बात केवल यहीं नहीं कही गयी है, अपितु अन्य शास्त्रों में भी इसकी चर्चा है। इस सम्बन्ध वहाँ क्या कहा गया है और वे कौन शास्त्र हैं— इसका कथन कर रहे हैं—

उन शास्त्रों की परम्परा का मुख्य ग्रन्थ श्रीमतङ्ग शास्त्र है। इसमें और इस परम्परा में आने वाले अन्य ग्रन्थों में भी यही तथ्य प्रतिपादित है। वह तथ्य यह है कि, अशक्ति के कारण इस विद्या के प्रति जिनके अध्यवसाय संभव नहीं हैं, उनके लिये गुरु का विधान सुखोपाय रूप ही उचित है। इस तरह मोक्ष की अभ्युपायता दीक्षा में निहित है, यह सिद्ध हो जाता है।

इस मार्ग में अशक्ति नहीं होनी चाहिये। पर बहुत से दीक्ष्य साधक ऐसे होते हैं, जो पूरी जानकारी नहीं रखते। अज्ञ होते हैं। ज्ञानरूपिणी विद्या के प्रति उनकी अज्ञता ही शक्तिहीनता है। इस विज्ञान को जो स्वयं मोक्षप्रद है, अपनाने

**इति श्रीमन्मतङ्गाख्ये ह्युक्ता मोक्षाभ्युपायता ।**

येषामज्ञत्वेन असामर्थ्यात् सम्यग्ज्ञानस्वभावां विद्यां प्रति मोक्षोपायताया-मध्यवसायो निश्चयो नास्ति तेषामिदं गुरुकर्तृकं क्रियाप्रधानं विधानं सुखोपायमुदितम्, एवमनायासमेवैषां मोक्षः स्यादिति। एतच्छ्रीमन्मतङ्गशास्त्रादावपि उक्तम् ।।८।।

ननु इह पुंसां ज्ञानक्रियावरणकारिद्रव्यात्ममलकार्यमज्ञानं, तच्च कारणभूते तस्मिन्ननिवर्तिते न निवर्तते पटलाद्यनिवृत्तावन्धानामिव आन्ध्यम्। तद्विनिवर्तने च क्रियैव शक्ता, न ज्ञानं तस्य द्रव्यविनिवर्तने सामर्थ्यादृष्टेः। नहि चक्षुषोर्वैद्यव्यापारमन्तरेण पटलोऽयमिति ज्ञानादेव तद्विनिवृत्तिः स्यात्। तस्मात् क्रियैव आवरणापगमे साक्षादुपायो न ज्ञानमित्येतत्कथमुक्तमित्याशङ्क्य आह

**सम्यग्ज्ञानस्वभावा हि विद्या साक्षाद्विमोचिका ।।९।।**

इह मलो नाम न किञ्चन द्रव्यम्, अपितु अज्ञानं, तच्च ज्ञानोदयादेव निवर्तत इत्युपपादितं प्राक् बहुशः। तत् स्वविरुद्धमज्ञानं विनिवर्तयत्, सम्यग्ज्ञानमेव पुंसां

---

में, उनका असामर्थ्य होता है। इसके कारण वे इस दिशा में कोई अध्यवसाय नहीं कर पाते हैं। कोई निर्णायक निश्चय वे नहीं कर पाते हैं कि, हमें क्या करना चाहिये?

ऐसे लोगों को गुरु के उपदेश ही आधार होते हैं। गुरु का विधान अर्थात् गुरु दीक्षा ही सुखोपाय है। गुरुद्वारा निर्दिष्ट क्रिया प्रधान-विधान ही उनके पथ को प्रशस्त करता है। इस तरह अनायास ही उन्हें मुक्ति प्राप्त हो जाती है। यह मोक्षाभ्युपायता श्रीमतङ्ग या इसके अनुगत अन्य शास्त्रों में भी स्पष्टरूप से कही गयी है।।८।।

प्रश्न उपस्थित होता है कि, अज्ञान क्या है? पुरुषों के ज्ञान और उनकी क्रिया का आवरण करने वाले द्रव्यात्मक मल के कार्य को ही अज्ञान कहते हैं। यह अज्ञान अपने कारण रूप मल के निवृत्त हुए विना जा ही नहीं सकता। जैसे किसी की आँख में पटल (मोतियाबिन्द) रोग हो गया है। वह एक तरह से दृष्टि के आवरण के कारण अन्धा हो गया है। उसके हटा देने पर ही उस

साक्षान्मोक्षहेतुरिति युक्तमुक्तं साक्षान्मोचिकां विद्यां प्रति अकुशलानां क्रिया सुखमुपाय इति।।९।।

न च एतदस्माभिः स्वोपज्ञमेव व्याख्यातमित्याह

**उक्तं तत्रैव तत्त्वानां कार्यकारणभावतः।**
**हेयादेयत्वकथने विद्यापाद इति स्फुटम् ।।१०।।**

---

अन्धे हो गये व्यक्ति की अन्धता समाप्त होती है। उसी तरह अज्ञान रूप और मल रूप पटल (आवरण) को हटाने में क्रिया (शल्यक्रिया) ही समर्थ होती है। ज्ञान समर्थ नहीं होता। द्रव्य की निवृत्ति में ज्ञान की शक्ति असमर्थ होती है। उदाहरण के रूप में आंखों को चिकित्सक द्वारा क्रिया व्यापार के बिना यह पटल है, इस जानकारी रूप ज्ञान से वह पटल हटाया नहीं जा सकता। पटल को हटाने में पटल-ज्ञान कारण नहीं होता। अर्थात् ज्ञान में यह ताकत नहीं हो सकती है कि, वह द्रव्यात्मक मल को हटा सके। इस लिये क्रिया ही आवरण को दूर हटाने में साक्षात् ऊपाय होती है। ज्ञान साक्षात् उपाय नहीं हो सकता। ऐसी स्थिति में भी ज्ञान की मोक्ष के प्रति साक्षात् उपायता की बात मतङ्ग शास्त्र में किस आधार पर लिखी गयी है? इस आशङ्का का उत्तर दे रहे हैं कि—

सम्यक् ज्ञान स्वभाववाली विद्या ही साक्षात् विमोचिका अर्थात् मुक्तिदांयिनी मानी जाती है।

इस स्थिति पर विचार करें और देखें कि, मल क्या कोई द्रव्य है? क्या द्रव्य की परिभाषा मल में चरितार्थ होती है? क्या अज्ञान द्रव्य है? अज्ञान ज्ञान के उदय होने पर निवृत्त हो जाता है। इस अवस्था में स्वयं ज्ञान के विरोधी अज्ञान को निवृत्त करने वाला सम्यक् ज्ञान ही पुरुषों के मोक्ष का साक्षात् हेतु सिद्ध होता है। इसलिये कारिका में साक्षात् विमोचिका विद्या मानी गयी है और यह भी संकेतित कर दिया गया है कि, जो अज्ञ हैं, अकुशल हैं, उनकी विद्या के प्रति क्रियाशीलता ही साक्षात् उपाय होती है।।९।।

यह कथन मेरा स्वोपज्ञ कथन नहीं है। वरन् श्रीमतङ्ग शास्त्र के विद्यापाद में यह कहा गया है कि,

तत्र श्रीमन्मतङ्गशास्त्रे एव विद्यापादे तत्त्वानां कार्यकारणभावमवलम्ब्य हेयेपादेयत्वाभिधानप्रस्तावे

**'न प्रक्रियापरं ज्ञान................' (स्व. ११।१९९)**

इत्याद्युक्तन्यायेन इति एतत् सर्वं स्फुटं सन्देहविपर्यासरहितत्वादपरिम्लानमुक्तं, किं ग्रन्थविस्तरेण, तत एव अवधार्यमित्यर्थः। यदुक्तं तत्र

**'विवेको यत्र तत्त्वानां कार्यकारणभेदतः ।**
**यथावदुदितं वस्तु हेयं चैवोपवर्ण्यते ।।**
**विद्यापादः स विज्ञेयः......................' (२।१)**

इति उद्दिश्य

**'पाश्यः पाशयिता पाशस्त्रयमेतद्व्यवस्थितम् ।**
**साध्यसाधनभावोक्त्या यथा तत्प्रकटं भवेत् ।।**

---

कार्य-कारण भाव का अवलम्बन कर हेयोपादेय विज्ञान के कथन के प्रसङ्ग में विद्यापाद में यह स्पष्ट कहा गया है। स्वच्छन्द तन्त्र के ११/१९९ में भी कहा गया है कि,

"प्रक्रिया से बढ़कर कोई ज्ञान नहीं होता।"

स्वच्छन्द तन्त्र की यह उक्ति एतद्विषयक सारी सन्देह-राशि का निराकरण करती है। अपरिम्लान अर्थात् स्पष्टरूप से कही गयी उस उक्ति को यहाँ उद्धृत कर रहे हैं—

"जहाँ तत्त्वों के कार्यकारण भेद का विवेक होता है, वहाँ वस्तु के उदित होने का तथा उसके हेय रूप का उपवर्णन किया जाता है। इस तथ्य के सन्दर्भ को जिस प्रकरण में वर्ण्यविषय बनाया गया है, वही स्थल विद्यापाद कहलाता है"। विद्यापाद के सम्बन्ध में ऐसा निर्देशकर प्रस्तुत विषय इस रूप में कहा गया है—

"इस सर्जन प्रक्रिया में तीन बातें स्पष्टरूप से व्यवस्थित की गयी हैं। १. पाश्य, २. पांशयिता और ३. पाश। साध्य और साधन भाव के उपदेश के माध्यम से जिस प्रकार उक्त तीनों बातों का स्पष्टीकरण होता है, उसी प्रकार

**तथा सम्यक्प्रवक्तव्यं तावद्विद्यावधार्यताम् ।' (६।३)**

इत्यादिप्रश्नोत्तरद्वारेण अनेकप्रकारम् ।।१०।।

ननु यद्येवं विद्यैव साक्षान्मोचिका, तत्किं क्रियादिपादत्रयोपात्तेन दीक्षादिनेत्याशङ्क्याह

**तत्राशक्तास्तु ये तेषां दीक्षाचर्यासमाधयः ।**

ननु एवं

**'सदाशिवपदं योगाच्चर्यातो वाथ दीक्षया।**
**प्राप्यते चित्तभेदेन मोक्षो वाथ चतुष्टयम् ।। (मत. २६।६३)**

इत्याद्युक्त्या ज्ञानादेश्चतुष्टयादपि अविशेषेणैव मुक्तिः स्यात्, तत्कथं ज्ञानस्य तद्वतो वा गुरोरपि सर्वत्रैव उत्तमत्वमित्याशङ्क्य आह

---

से सम्यक् रूप से उन पर प्रवचन करना चाहिये। गुरु के इस विशेष वक्तव्य के आधार पर विद्या का अवधारण किया जाना चाहिये।''

मतङ्ग शास्त्र की इन उक्तियों में विद्या के महत्त्व का वर्णन है। विद्या ही साक्षात् उपाय है, इससे यह सिद्ध हो जाता है।।१०।।

प्रश्न उपस्थित होता है कि, यदि विद्या में ही साक्षात् मोक्ष की उपायता है, तो फिर मतङ्ग शास्त्र में तीन अन्य 'विद्यापाद' नामक अध्यायों के द्वारा समर्थित दीक्षा की क्या उपयोगिता रह जाती है? इस पर कह रहे हैं कि,

साधना और स्वात्मसंविद् विवेक में जो अशक्त होते हैं, उनके लिये दीक्षा, चर्या और समाधि का भी महत्त्व है। इनके सतत अभ्यास से मुक्ति हस्तामलकवत् प्राप्त हो जाती है। मतङ्ग २६।६३ में यह स्पष्ट कहा गया है कि,

''सदाशिव पद योग, चर्या अथवा दीक्षा द्वारा प्राप्त किया जाता है। साधक के चिन्तन के स्तर के अनुकूल मोक्ष सरलता से मिल जाता है। अथवा योग, चर्या, दीक्षा और चिन्तन ये चारों भीआचरित होने पर मोक्ष के साधन बनते है''।

**ते विद्यापूर्वका यस्मात्तस्माज्ज्ञान्युत्तमोत्तमः ।।११।।**

विद्यापूर्वका इति ज्ञात्वा हि अनुष्ठानं भवेदिति भावः ।।११।।

ननु इह समनन्तरोक्तयुक्त्या दीक्षामन्तरेण योगज्ञानादावधिकार एव न भवेदिति ज्ञानं दीक्षापूर्वकमिति वक्तव्यं, प्रत्युत कथमेतदन्यथोक्तमित्याशङ्क्य आह

**ज्ञानं च शास्त्रात्तच्चापि श्राव्यो नादीक्षितो यतः ।**
**अतोऽस्य संस्क्रियामात्रोपयोगो दीक्षया कृतः ।।१२।।**

नादीक्षितः श्राव्य इति, संस्क्रियामात्रोपयोग इति च। यदुक्तं

---

प्रश्न करने वाला पूछता है कि, उक्त कथन द्वारा ज्ञान आदि इन चारों में समान रूप से मुक्ति की उपायता सिद्ध होती है। ऐसी स्थिति में ज्ञान और ज्ञानवान् गुरु की ही श्रेष्ठता का ही सर्वत्र क्यों वर्णन किया जाता है? इस आशङ्का का समाधान कर रहे हैं कि,

चूँकि ज्ञानवान् गुरु विद्या के स्वाध्याय, अनुभव और पूर्वानुभूत व्यवहार के आधार पर ही समाज में अपना प्रभाव स्थापित करते हैं। इसलिये ज्ञानवान् गुरु उत्तमोत्तम माने जाते हैं। विद्यापूर्वक क्रियायोग विज्ञ के रूप से प्रसिद्धि होने पर ही उनसे अनुष्ठान आदि सम्पन्न किये कराये जाते हैं।।११।।

अभी पहले यह विषय आ चुका है कि, दीक्षा से ही योग और ज्ञान आदि में अधिकार प्राप्त होता है। विना दीक्षा के यह अधिकार भी नहीं होता कि, कोई योग मार्ग आदि में प्रवेश करे। इस लिये कहना तो यह चाहिये कि ज्ञान ही दीक्षा पूर्वक होता है। इसके विपरीत यहाँ विद्यापूर्वक ज्ञानी और ज्ञान की उत्तमता का उल्लेख किया गया है। प्रश्न है कि ऐसा क्यों? इसका समाधान कर रहे हैं—

ज्ञान शास्त्रों के स्वाध्याय से होता है। ऐसे शास्त्रों का श्रवणाधिकार भी दीक्षा हीन पुरुष को नहीं है। इसलिये अदीक्षित की संस्क्रियामात्र सम्पन्न हो, एतदर्थ दीक्षा से ही श्रवणाधिकार मिले और ज्ञान हो, यह ध्यान में रखकर ही

**'अदीक्षितानां पुरतो नोच्चरेच्छिवपद्धतिम् ।'** इति,

**'समयी संस्कृतो ह्येवं वाचनेऽस्यार्हता भवेत् ।**
**श्रवणेऽध्ययने होमे पूजनादौ तथैव च ।।**
**चर्याध्यानविशुद्धात्मा लभते पदमैश्वरम् ।**

**(स्व. ४।४९)** इति च।।१२।।

ननु अस्य दीक्षया संस्कारमात्रोपयोग एव भवेदिति सा कस्मादुक्तं यदयमनया योजनिकाबलात् तत्तत्पदमवाप्यासादयेदित्याशङ्क्य आह

**यत्र तत्रास्तु गुरुणा योजितोऽसौ फलं पुनः ।**
**स्वविज्ञानोचितं याति ज्ञानीत्युक्तं पुरा किल ।।१३।।**

स्वविज्ञानोचितमिति अकृतशिवतत्त्वयोजनिकोऽपि हि समयी तथा तथा ज्ञानमभ्यस्यंस्तदैकात्म्यं यायादित्याशयः। पुरेति चतुर्थाह्निकादौ।।१३।।

---

विद्या पूर्वक ज्ञानी की उत्तमता की बात कही गयी है। अदीक्षितोंके विषय में कहा गया है कि,

"अदीक्षित के समक्ष शिव-परम्परा के सिद्धान्तों का उच्चारण भी न करे।" इस सम्बन्ध में स्वच्छन्दतन्त्र के ४/७९ श्लोक में भी यह कहा गया है कि,

"समयी शिष्य इसप्रकार संस्कार सम्पन्न हो जाता है। इसके बाद ही उसमें शास्त्रों को सुनने की, पढ़ने की, स्वाध्याय करने की, हवन और पूजन आदि करने की अर्हता होती है। इसप्रकार वह अनुशासित चर्या और ध्यान के द्वारा विशुद्धात्मा बन जाता है और ऐश्वर पद को प्राप्त कर लेता है।"

इस तरह ज्ञान और दीक्षा का अन्योन्याश्रय सम्बन्ध भी शास्त्रों द्वारा सिद्ध होता है। फिर भी ज्ञानवान् की उत्तमोत्तमता पर कोई अंगुली नहीं उठायी जा सकती।।१२।।

प्रश्न है कि, शैव परम्परा के गुरुक्रम में जो दीक्षा दी जाती है, उससे शिष्य के संस्कार में परिष्कार होता है। अर्थात् दीक्षा का संस्कार मात्र में ही उपयोग होता है। यह कथन कहाँ तक उचित है? दीक्षा के विषय में यह भी कहा जाता

तीव्रशक्तिपातपवित्रितस्य पुनस्तत्संस्कारोपयोगोऽपि नास्तीत्याह

**यस्य त्वीशप्रसादेन दिव्या काचन योग्यता ।**
**गुरोः शिशोश्च तौ नैव प्रति दीक्षोपयोगिता ।।१४।।**

ननु एवं विधौ गुरुशिष्यौ प्रति दीक्षाया यद्युपयोगो नास्ति, तत् ज्ञानादावनयोरधिकार एव कथंकारं स्यादित्याशङ्क्य आह

**ज्ञानमेव तदा दीक्षा श्रीत्रैशिकनिरूपणात् ।**

ज्ञानमिति अर्थात्सांसिद्धिकम्। यदुक्तं तत्र

---

है कि, दीक्षा से योजनिका प्रक्रिया द्वारा उन उन वांछित पदों को प्राप्त करता है और वहाँ अधिष्ठित हो जाता है। इन दोनों वाक्यों में और इनके अर्थ में इतना अन्तर क्यों? इस पर कह रहे हैं—

शिष्य गुरु द्वारा जहाँ भी योजित किया गया हो, फल तो वह स्वात्मविज्ञान के आधार पर ही प्राप्त करता है। वही ज्ञानी कहलाता है। यह सन्दर्भ पहले भी चतुर्थ आह्निक आदि में आ चुका है।

यहाँ स्वात्म विज्ञानोचित शब्द यह संकेत भी करता है कि, यदि शिष्य किसी योजनिका का आधार न भी प्राप्त किया हो या यदि गुरु ने कहीं योजित नहीं किया है, तो वह पहले अपनी बुद्धि और विवेक का आश्रय लेता है। तदनुरूप फल भी उसे अवश्य ही उपलब्ध हो जाता है। अपने विवेक-विज्ञान को परिष्कृत कर रहस्य-दर्शन का अभ्यास करता है और चिदैकात्म्य भाव से भावित हो जाता है।।१३।।

जो साधक तीव्र शक्तिपात से पवित्र हो चुका है, उसके लिये तो किसी संस्कार का कोई उपयोग नहीं है। यही कह रहे हैं—

जिस साधक को परमेश्वर की कृपा से किसी प्रकार की अकल्पनीय कोई योग्यता आ जाती है, उसके लिये किसी दीक्षा की कोई उपयोगिता नहीं है, साधकवर्ग में गुरु और शिष्य दोनों आते हैं।

**'एवं यो वेत्ति तत्त्वेन तस्य निर्वाणगामिनी।**
**दीक्षा भवत्यसन्दिग्धा तिलाज्याहुतिवर्जिता ।'**

(परात्री. २५)

इत्युपक्रम्य

**'स सिद्धिभाग्भवेन्नित्यं स योगी स च दीक्षितः ।'** इति।।१४।।

तद्वानेव च सर्वशास्त्रेषु परमुत्तमोऽधिकारीत्युक्त इत्याह

**सर्वशास्त्रार्थवेत्तृत्वमकस्माच्चास्य जायते ।।१५।।**

---

यहाँ स्वाभाविक रूप से यह जिज्ञासा उत्पन्न होती है, कि ऐसे गुरु और ऐसे शिष्य के लिये किसी प्रकार की दीक्षा का उपयोग नहीं है, तो फिर ज्ञान आदि में इनका अधिकार कैसे हो सकता है? इस आशङ्का का समाधान कर रहे हैं—

उस समय उसका ज्ञान ही उसकी दीक्षा बन जाती है। यह बात परात्रीशिका में निरूपित की गयी है। वहाँ कहा गया है कि,

"इस प्रकार के विज्ञान की तात्त्विकता जिस साधक के मन में संस्कार आदि रूप से दृढ़ हो गयी है, उसकी मुक्तिप्रदा निर्वाण दीक्षा तिलों और आज्य आहुतियों के कर्मकाण्ड से वर्जित रूप से पारमेश्वर शक्तिपात के माध्यम से ही सम्पन्न हो जाती है" ।।परात्रीशिका—२५-२६।।

इससे भी स्पष्ट रूप से परात्रीशिका के ही श्लोक १९ में स्पष्ट घोषणा की गयी है कि, जो कोई भी तात्त्विक रूप से जान लेता है, भले ही चक्र-भेदन आदि योग-प्रक्रिया साधना पूरी न कर सका हो, वह नित्य सिद्धिभाग् अर्थात सिद्ध है, वही सच्चा योगी है और वही दीक्षित है। उसे किसी से दीक्षा लेने की आवश्यकता नहीं।।१४।।

**इति श्रीमालिनीनीत्या यः सांसिद्धिकसंविदः ।**
**स उत्तमाधिकारी स्याज्ज्ञानवान्हि गुरुर्मतः ।।१६।।**

सांसिद्धिकसंविद इति स्वतःप्रवृत्तसत्तर्क इत्यर्थः। यदुक्तं प्राक्

**'यस्य स्वतोऽयं सत्तर्कः सर्वत्रैवाधिकारवान् ।**
**अभिषिक्तः स्वसंवित्तिदेवीभिर्दीक्षितश्च सः ।।**
**स एव सर्वाचार्याणां मध्ये मुख्यः प्रकीर्तितः ।'**

(४।४३) इति।।१६।।

तच्चास्य ज्ञानं सर्वविषयमागमेषूक्तमित्याह

**आत्मने वा परेभ्यो वा हितार्थी चेतयेदिदम् ।**
**इत्युक्त्या मालिनीशास्त्रे तत्सर्वं प्रकटीकृतम् ।।१७।।**

---

ऐसे ज्ञानवान् सिद्ध साधक को सभी शास्त्रों का पूरा आधिकार भी प्राप्त हो जाता है। उसे सभी शास्त्रों के रहस्य का ज्ञान हो जाता है। अकस्मात् चमत्कार घटित होता है और वह सर्वज्ञ सा ही हो जाता है।

मालिनी विजयोत्तर तन्त्र में इस सबसे ऊँचे स्तर के ज्ञानवान् गुरु को 'सांसिद्धिक' संज्ञा प्रदान की गयी है। ऐसा संविद् तत्त्व में संसिद्ध साधक ही उत्तम अधिकारी माना जाता है। उक्त उत्तमोत्तम ज्ञान के स्तर पर अधिष्ठित प्रज्ञा-पुरुष ही वस्तुतः गुरु होता है।

सांसिद्धिकसंविद शब्द ज्ञानवान् गुरु का एक सटीक विशेषण है। इसके मूल में स्वतः स्वात्मसंविद् ऐकात्म्य हेतु प्रवृत्त होने का सत्तर्क उल्लसित होता है और ज्ञानी साधक को निर्विकल्प भूमि पर ला बिठलाता है। श्रीत. ४।४२-४३ द्वि. भाग पृ. ३५-३६ पर इस सम्बन्ध में यह कहा गया है कि "गुरु आदि से निरपेक्ष स्वात्म-विमर्श के उत्कर्ष के फलस्वरूप जिसमें सत्तर्क का उदय हो जाता है, वह सभी शास्त्रों का अधिकारी हो जाता है। वह स्वात्म संवित्ति देवियों से दीक्षित हो जाता है। आचार्यों में सर्वश्रेष्ठ मुख्य आचार्यवर्य रूप इस सांसिद्धिक गुरु के समक्ष अन्य सभी गुरुजन उस स्तर के नहीं माने जाते"।।१५-१६।।

इत्युक्त्येति। यदुक्तं तत्र

**'एतत्सर्वं परिज्ञेयं योगिना हितमिच्छता ।**
**आत्मनो वा परेषां वा नान्यथा तदवाप्यते ।।'** इति।

तदिति सांसिद्धिकं ज्ञानम्। सर्वमिति समस्तविद्यादिपादचतुष्टयविषयमित्यर्थः। यदस्य तावदात्मनि ज्ञानमेवोपयुक्तमित्युक्तप्रायम्। परे पुनर्विचित्रा इति तदाशयभेदमधिकृत्य क्रियादि सर्वमेव अपेक्षते येन अस्य तदनुग्रहः सिद्ध्येत्। यदभिप्रायेणैव

**'विद्यापादार्थकुशलः क्रियापादधृतक्रमः ।**
**योगपादकृताभ्यासश्चर्यापादानुवर्तकः ।।**

---

आगम प्रामाण्य द्वारा यह स्पष्ट कर रहे हैं कि, इसका ज्ञान सर्वविषयक होता है। यही यहाँ कह रहे हैं—

ऐसा ज्ञानवान् गुरु अपने प्रिय शिष्यों के हित के लिये या दूसरे जो भी अपेक्षा रखते हैं, उनके हित के लिये, उनके कल्याण की कामना से उन्हें चेतित (संज्ञान समन्वित) करे, अर्थात् उन्हें इस ज्ञान की दीक्षा देने का वह वास्तविक अधिकारी होता है। इस प्रकार की उक्ति द्वारा श्री मालिनी विजयोत्तर तन्त्र में भी उक्त सांसिद्धिक ज्ञान और इस विषय से सम्बन्धित सब कुछ प्रकट किया गया है, यह स्पष्ट हो जाता है। वहाँ लिखा गया है कि,

ऐसे ज्ञानवान् गुरु को इन सब बातों का विचार करना चाहिये। उसे यह जानना चाहिये कि, हमसे अपने आत्मीय वर्ग का या उसके अतिरिक्त दूसरों का भी कैसे कल्याण हो सकता है। बिना इसके दूसरे इस अनूठे ज्ञान से वंचित रह जायेंगे। यह ज्ञान दूसरों द्वारा पाया ही नहीं जा सकता।

श्लोक में 'तत्' शब्द सांसिद्धिक ज्ञान के अर्थ में ही प्रयुक्त है। 'सर्व' शब्द भी शास्त्रों में वर्णित चार पादों वाली विद्या के व्यापक ज्ञान क्षेत्र के अर्थ में प्रयुक्त है।

**गुरुर्दीक्षां प्रकुर्वीत.........................।'**

इत्यादि अन्यत्र उक्तम्।।१७।।

ननु परे विचित्रा इत्यत्र किं प्रमाणमित्याशङ्क्य आह

**ज्ञानयोग्यास्तथा केचिच्चर्यायोग्यास्तथापरे ।**
**दीक्षायोग्या योगयोग्या इति श्रीकैरणे विधौ।।१८।।**

यदुक्तं तत्र

**ये यथा संस्थितास्ताक्ष्य तथैवेशः प्रसादकृत् ।**
**केचिच्चात्र क्रियायोग्यास्तेषां मुक्तिस्तथैव सा।।**
**ज्ञानयोग्यास्तथा चान्ये चर्यायोग्यास्तथापरे ।**
**एवं येषां तथा प्रोक्तो मोक्षस्तेनैव तस्य तु।।'** इति।।१८।।

---

यह सब ज्ञानवान् गुरु के मन में स्वतः स्पन्दित होता रहता है। आत्मीय जनों पर इसी लिये उसकी कृपा सदा बनी रहती है। पर दूसरे लोग तो बड़े विचित्र ही होते हैं। ज्ञानवान् गुरु उनके आशयों को समझ कर उनके स्तर के अनुरूप ही क्रिया आदि जो उनके लिये अपेक्षित होती है, उन सबका विधान करता है, जिससे उनके ऊपर अनुग्रह की सिद्धि हो सके। इसी अभिप्राय का स्पष्टीकरण एक दूसरे स्थान पर इस तरह किया गया है— शास्त्रीय ज्ञान के चार चरण प्रसिद्ध हैं। १. विद्या पाद, २. क्रियापाद, ३. योग पाद और ४. चर्यापाद।

इन चारों में कुशल, इनकी परम्पराओं के परिज्ञान में दक्ष, इनसे सम्बन्धित योग आदि के अभ्यास में अभ्यस्त और उनके अनुवर्त्तन प्रवर्त्तन में परायण ज्ञानवान् गुरु दीक्षा अवश्य प्रदान करे।।१७।।

ऊपर 'पर' की चर्चा है। आचार्य जयरथ इन्हें विचित्र विशेषण से विभूषित करते हैं। प्रश्न है कि, उनके वैचित्र्य का क्या प्रमाण है? इसी का स्पष्टीकरण शास्त्रकार कर रहे हैं—

उनकी विचित्रता के कारण उनके स्वभाव और स्तर होते हैं। उनमें कुछ लोग ज्ञान के योग्य होते हैं। कुछ ऐसे होते हैं, जिनको चर्या के नियमों का पालन करा कर परिष्कृत किया जाय। कुछ उनमें से दीक्षा के ही योग्य होते हैं और

एवमिदमियता सिद्धमित्याह

**तत्रोक्तलक्षणः कर्मयोगज्ञानविशारदः ।**
**उत्तरोत्तरताभूम्युत्कृष्टो गुरुरुदीरितः ।।१९।।**

तदुक्तं

**'गरीयान्कर्मिणो योगी स च ज्ञानवतः शिशुः ।'** इति।।१९।।

स एव च परं दीक्षाकर्मण्यधिकृत इत्याह

**स च प्रागुक्तशक्त्यन्यतमपातपवित्रितम् ।**
**परीक्ष्य पृष्ट्वा वा शिष्यं दीक्षाकर्म समाचरेत्।।२०।।**

---

कुछ योगाभ्यास की अपेक्षा रखते हैं। इनकी विचित्रता का यही आधार है। किरणागम शास्त्र में लिखा गया है कि,

हे तार्क्ष्य! जो जिस स्तर का है, जिस पाद की प्रवृत्ति वाला है, उसपर ईश उसी के अनुरूप अपनी कृपा की वर्षा करते हैं। जो उनमें क्रिया के योग्य होते हैं, उनकी मुक्ति उसी प्रकार से होती है। जो ज्ञान के योग्य हैं, जो चर्या के योग्य हैं और इसके अतिरिक्त जिसका जैसा स्वभाव होता है, उसकी उसी प्रकार से मुक्ति प्राप्त होती है।।१८।।

इस ऊपर कहे गये प्रकरण से यही निष्कर्ष निकलता है कि,

उक्त लक्षणों से लक्षित क्रियायोग-सक्षम ज्ञानवान् और सांसिद्धिक गुरु ही 'गुरुता' के सर्वोत्कृष्ट श्रद्धास्पद पद पर प्रतिष्ठित करने योग्य है। ऐसे व्यक्ति ही वस्तुतः शास्त्र द्वारा गुरु संज्ञा से विभूषित किये जाते हैं। इस सम्बन्ध में आगम कहता है कि,

'गरीयान् अर्थात् अपेक्षाकृत महत्त्वपूर्ण कर्मनिष्ठ योगी भी ज्ञानवान् गुरु के शिष्य के समान होता है।' अर्थात् शास्त्र जिसे सांसिद्धिक ज्ञान विशिष्ट गुरु कहते हैं, वही सर्वश्रेष्ठ गुरु होता है।।१९।।

वा विकल्पे। परीक्षया ह्यस्य बुभुक्षुता मुमुक्षुता वा साक्षान्न लक्षितेति किमसि बुभुक्षुर्मुमुक्षुर्वेति तं गुरुः पृच्छेदित्यधिकृत्य दीक्षाकर्म कुर्यात्।।२०।।

इह

'दीक्षा स्वतन्त्रेऽभिहिता......................।'

इति दृशा श्रीस्वच्छन्दशास्त्र एव प्राधान्येन दीक्षाया लक्षणुक्तम्, तद्वयमपि सर्वतस्तदर्थोपस्कृतत्वेनैव अत्र तामभिदध्म इति कटाक्षयितुं प्रमुख एव तत् संवादयति

**उक्तं स्वच्छन्दशास्त्रे च शिष्यं पृच्छेद्गुरुः स्वयम् ।**
**फलं प्रार्थयसे यादृक्तादृक्साधनमारभे।।२१।।**

---

वही पूर्ण रूप से दीक्षा का अधिकारी माना जाता है। यही कह रहे है—

इस तरह उक्त शक्तिपात रूप अनुग्रह करने में समर्थ सांसिद्धिक ज्ञानवान् गुरु ही स्वयं शक्तिपात पवित्रित शिष्य से पूछकर या परीक्षा लेकर पता लगा ले कि, यह बुभुक्षु है या मुमुक्षु। इसके बाद ही तदनुरूप दीक्षा देकर उसे अनुगृहीत करे और अधिकारपूर्वक दीक्षाकर्म सम्यक् रूप से संपन्न करे।।२०।।

इस परम्परा में, "दीक्षा स्वतन्त्र (स्वच्छन्द तन्त्र) में ही अधिकृत (रूप से) अभिहित ...................... है"

इस उक्ति के अनुसार स्वच्छन्द शास्त्र में ही प्रधान रूप से दीक्षा वर्णित की गयी है। दीक्षा का लक्षण भी अच्छी तरह समझाया गया है। उन्हीं अर्थों को सजा कर, उन्हीं लक्ष्यों को प्रधानतया दृष्टि में रखकर, उन्हीं का अध्याहार कर हम भी दीक्षा के लक्षण को लक्षित कर रहे हैं। यह कहकर शास्त्रकार तत्काल प्रमुखता के स्तर पर उसी का प्रतिपादन कर रहे हैं—

स्वच्छन्द शास्त्र में यह स्पष्ट रूप से कहा गया है कि, गुरु शिष्य से स्वयं यह पूछे कि, तुम क्या चाहते हो? तुम जिस लक्ष्य या साध्य की अभ्यर्थना करोगे, मैं उसी प्रकार का साधनकर्म आरम्भ करूँगा। शास्त्र में यह कहा गया है कि,

**वासनाभेदतः साध्यप्राप्तिर्मन्त्रप्रचोदिता ।**

यादृगिति भुक्तिरूपं मुक्तिरूपं वा। साधनं दीक्षाविधिम्। वासना शिष्याणां बुभुक्षुर्मुमुक्षुर्वा अस्मीति, गुरोश्च एवंविधामेव दीक्षामस्मै करोमीति चैतसिकोऽनुसन्धानविशेषः। साध्यं भुक्तिर्मुक्तिर्वा।।२१।।

ननु मन्त्रादिभेदादपि तद्भेदोऽस्तीत्याशङ्क्य आह

**मन्त्रमुद्राध्वद्रव्याणां होमे साधारणा स्थितिः ।।२२।।**
**वासनाभेदतो भिन्नं शिष्याणां च गुरोः फलम्।**

---

साध्य की प्राप्ति वासना भेद पर ही निर्भर करती है। यह साधना भी मन्त्र से प्रेरित होनी चाहिये।

गुरु द्वारा पूछने का यही अर्थ होता है कि, शिष्य भुक्ति चाहता है या मुक्ति? यह तो पता चले। उसके बाद ही अर्थात् बुभुक्षु-मुमुक्षु के निर्णय के उपरान्त ही वह साधन अर्थात् दीक्षा की विधि का प्रयोग करता है। इसमें शिष्य की वासना का ही महत्त्व है। शिष्य की वासना यदि भुक्ति में होती है, तो वह बुभुक्षु और यदि मुक्ति में होती है, तो वह मुमुक्षु माना जाता है। गुरु के हृदय में भी यह चैतसिक अनुसन्धान रहता है कि, मैं शिष्य को वैसी ही दीक्षा दूँगा, जिसका वह अधिकारी है। इससे साध्य-प्राप्ति में सरलता होती है। बुभुक्षु शिष्य की साध्य भुक्ति होती है और मुमुक्षु शिष्य की साध्य मुक्ति। इसी के अनुसार गुरु दीक्षाकर्म समाचरित करता है।।२१।।

ऊपर मन्त्र प्रेरित साध्य प्राप्ति की बात लिखी गयी है। इसी का समर्थन कर रहे हैं कि,

मन्त्रों का प्रयोग तो होता ही है। उसके साथ ही साथ मुद्राओं के प्रयोग भी अपेक्षित होते हैं। अध्वद्रव्यों की आहुतियाँ भी होती हैं। पर इनकी प्रधानता नहीं होती, वरन् सामान्य स्थिति ही स्वीकार की जाती है। वस्तुतः वासना भेद का ही वैशिष्ट्य या महत्त्व है। शिष्यों की सफलता और गुरुजनों की यशस्विता

नहि मन्त्रादीनां भुक्तौ मुक्तौ व कश्चिदतिशय इत्याशयः।।२२।।

अत एव च शिष्याणां भेद इत्याह—

**साधको द्विविधः शैवधर्मा लोकोज्झितस्थितिः।।२३।।**

**लोकधर्मी फलाकांक्षी शुभस्थश्चाशुभोज्झितः ।**
**द्विधा मुमुक्षुर्निर्बीजः समयादिविवर्जितः ।।२४।।**
**बालबालिशबृद्धस्त्रीभोगभुग्व्याधितादिकः ।**
**अन्यः सबीजो यस्येत्थं दीक्षोक्ता शिवशासने।।२५।।**

---

उनके साध्यानुसार साधन पर निर्भर करती है। इससे यह निष्कर्ष निकलता है कि मन्त्रों आदि का भुक्ति या मुक्ति में अतिशय नहीं होता। इन्नके प्रयोग से उनकी सहफलवत्ता अवश्य प्रभावित होती है।।२२।।

इसी आधार पर शिष्यों के भेद प्रभेद भी किये जाते हैं। यही कह रहे हैं—

साधक दो प्रकार के होते हैं। १. शैवधर्मा और २. लोकधर्मी। शैव एव धर्मो यस्य इस बहुब्रीहि समास में अनिच् प्रत्यय लगने से शैवधर्मा शब्द निष्पन्न होता है। ऐसा साधक लोक-लालसा से लालित नहीं होता वरन् उसका एक तरह से अपरिग्रह द्वारा परित्याग ही करता है। दूसरा साधक लोकस्थधर्मी होता है। लोकः धर्मः अस्य अस्ति इस विग्रह के अनुसार इनि प्रत्यय लगाकर लोकधर्मी शब्द बनता है। इसका अर्थ स्पष्ट है। लोक-लालसा प्रधान धर्म वाले साधक लोकधर्मी कहलाते हैं। ये लोग फलाकांक्षी होते हैं। शुभ में नियत प्रवृत्ति और अशुभ का अभाव इनको अभिप्रेत होता है। शैवधर्मा मुमुक्षु और लोकधर्मी बुभुक्षु होता है।

मुमुक्षु साधक भी दो प्रकार के होते हैं। १. निर्बीज मुमुक्षु और २. सबीज मुमुक्षु। मुमुक्षु साधक को समयाचार अपनी सीमा में नहीं बाँध सकते। इस परिवेश से ये ऊपर होते हैं। मुमुक्षु की तरह ही बालक, बालिश (मूर्ख) वृद्ध (वार्द्धक्य से, जरा से जीर्ण), स्त्री, भोग-लिप्त जीव भी माने जाते हैं। ये समय का पालन कर ही नहीं सकते। मुमुक्षु अपने स्तरीय सौभाग्य से समयादि विवर्जित होता है और ये दूसरे अपने सामर्थ्यवश ऐसा नहीं कर

**विद्वद्द्वन्द्वसहानां तु सबीजा समयात्मिका।**
**दीक्षानुग्राहिका पाल्या विशेषसमयास्तु तैः ।।२६।।**

तत्र बुभुक्षुः साधकः। स च द्विविधः शिवधर्मी लोकधर्मी च। मुमुक्षुः पुत्रकः। स च द्विविधो निर्बीजः, सबीजश्च। सबीज एव कृताभिषेक आचार्य इति विभागः। समयित्वं पुनरेतत्पदप्राप्तियोग्यतापात्रमिति नासौ पृथगिह उक्तः। यथोक्तं

'....................**समयी राजपुत्रवत्।**' इति।

---

सकते। इस लिये शास्त्र ने भी इन्हें समय की सीमा के नियत नियमों के पालन से मुक्त ही कर दिया है।

इसके अतिरिक्त सबीज मुमुक्षु की श्रेणी आती है। शिव शासन में इनकी दीक्षा इस प्रकार की होती है, जिसमें समय का पालन अत्यन्त आवश्यक होता है। विद्वान् पुरुषों, द्वन्द्व सहन करने में समर्थ और सक्षम पुरुषों के लिये समयात्मिका सबीजा दीक्षा दी जाती है। दीक्षा शिष्य के जीवन में अनुग्रह के अमृत की वर्षा करती है। इसलिये यह अनुग्रहात्मिका मानी जाती है। जो विशेष समयी हैं, उनके द्वारा यह अवश्य पालनीय है।

यह ध्यान देने की बात है कि, मुमुक्षु साधक गुरु को पुत्र से भी प्यारा होता है। पुत्रक दीक्षा के सम्बन्ध में अलग वर्णन किया गया है। मुमुक्षु दीक्षा निर्बीज भी मानी जाती है। सबीजा समयात्मिका दीक्षा होती है। समय पालन करना इसलिये अनिवार्य माना जाता है कि, इस जीवन में यदि शुभ्र का ही अभिलाष है, तो उसकी प्राप्ति के लिये इन नियमों का पालन अनिवार्य है। समय पालन से ही भोग प्राप्ति का सामर्थ्य उत्पन्न होता है। इसीलिये कहते हैं कि—

"समयी राजपुत्र की तरह..............."। स्वच्छन्द तन्त्र श्लो. ४।८३-८६ के उदाहरण से शास्त्र वचन को प्रमाणित कर रहे हैं—

(इनका अर्थ ऊपर प्रायः आ ही चुका है। इसलिये सबिन्दु संकेतों से इसके अर्थ को व्यक्त किया जा रहा है।

समयादिविवर्जित इति बालादीनां तत्परिपालनासामर्थ्यात्। समयात्मिकेति विद्वदादीनां तत्परिपालने सामर्थ्यात्। अत एव उक्तं तैस्तु विशेषसमयाः पाल्या इति। तदुक्तं तत्र

**'साधका द्विविधास्तत्र शिवधर्म्येकतः स्थितः।**
**शिवमन्त्रविशुद्धाध्वा साध्यमन्त्रनियोजितः॥**
**ज्ञानवांश्चाभिषिक्तश्च मन्त्राराधनतत्परः।**
**त्रिविधायास्तु सिद्धेर्वै सोऽत्रार्हः शिवसाधकः॥**
**द्वितीयो लोकमार्गस्थ इष्टापूर्तविधौ रतः।**
**कर्मकृत्फलमाकाङ्क्षञ्छुभैकस्थोऽशुभोज्झितः॥**
**तस्य कार्यं सदा मन्त्रैरशुभांशविनाशनम्।'**

(४।८६) इति,

---

१. "साधक दो प्रकार के होते हैं। पहला साधक शिवधर्मी कहलाता है। यह शिव-मन्त्र से विशुद्ध अध्वावान्, साध्य मन्त्र में नियोजित, ज्ञानवान्, अभिषिक्त, मन्त्र द्वारा आराधना में तत्पर और त्रिविध सिद्धियों का अधिकारी शिवधर्मी साधक कहलाता है। शिव शास्त्रोक्त समयाचार का पालक होता है। यहाँ त्रिविध सिद्धि से तात्पर्य मन्त्र से अध्वशुद्धि, साध्य-सिद्धि की मन्त्र योजना का साफल्य और मन्त्र की आराधना की परायणता है। इन सभी का वह अधिकारी होता है तथा इसी के फल स्वरूप ज्ञानवान् और आभिषिक्त भी हो जाता है।

त्रिविध सिद्धियों के अन्तर्गत त्रिविध अनुत्तर समावेश सिद्धि, इच्छा और उन्मेष सिद्धि, पुंविद्याशिवात्मक सिद्धि, नर-शक्ति-शिवात्मक सिद्धि, अशुद्धि-शुद्ध्यमानता और शुद्धि की सिद्धि, भेद, अभेद और भेदाभेद मयत्व की सिद्धि, पर, परापर और अपर तत्त्व शुद्धि तथा शिवधर्मिता में इच्छा, ज्ञान और क्रियामयी सिद्धि ये सभी सिद्धियाँ आती हैं। शिव-धर्मा साधक इन सबका अधिकारी होता है। स्वच्छन्द तन्त्र शिवधर्मी को शिवसाधक शब्द से विभूषित करता है।

'मुमुक्षुर्द्विविधः प्रोक्तो निर्बीजो बीजवान्पुनः ।
बालबालिशवृद्धस्त्रीभोगभुग्व्याधितात्मनाम् ।।
तेषां निर्बीजिका दीक्षा समयादिविवर्जिता ।
विद्वद्द्वन्द्वसहानां तु सबीजा कीर्तिता प्रिये ।।

---

२. द्वितीय साधक लोकधर्मी होता है। इसकी विशेषतायें हैं—

अ— इष्टापूर्त्तविधि में सदा रत रहता है।

आ— फलाकांक्षापूर्वक कर्म करता है।

इ— शुभ में स्थित रहता और अशुभ से दूर भागता है।

ई— मन्त्रों की जप-सिद्धि द्वारा अशुभांशिक भोगों को न भोगना पड़े, इसलिये उनके विनाश में तत्पर रहता है।''

इस प्रसङ्ग के अतिरिक्त भी स्वच्छन्द तन्त्र के ही श्लोक ४।८७ से ९० तक का उद्धरण प्रस्तुत कर रहे हैं—

१. ''मुमुक्षु साधक दो प्रकार के होते है।

१. निर्बीज और २. सबीज (बीजवान्)।

२. निर्बीज दीक्षा के पात्र— १. बालक, २. बालिश, (मूर्ख) ३. वृद्ध, ४. स्त्री, ५. भोगलिप्त, ६. रोगी और ७वाँ मुमुक्षु।

३. इनकी दीक्षा समयादि विवर्जित होती है।

४. सबीजा दीक्षा के पात्र—

१. विद्वान् लोग, २. सांसारिक द्वन्द्व के आघातों को सहते सहते जिनकी पीठ कमठ हो गयी हो।

५. समयाचार संयुक्त दीक्षा इन्हें दी जाती है।

६. इनकी दीक्षा अनुग्राहिका दीक्षा कहलाती है।

७. मन्त्रपीठ में विशेष समयाचार निर्दिष्ट हैं। सबीज शिष्य को उन सबका पालन करना चाहिये। इससे मोक्ष की प्राप्ति सरल हो जाती है।

**दीक्षानुग्राहिका तेषां समयाचारसंयुता ।**
**विशेषसमयाचारा मन्त्राख्ये ये प्रकीर्तिताः ।।**
**तेऽत्र पाल्याः प्रयत्नेन मोक्षसिद्धिमभीप्सता ।**
**सबीजा सा तु विज्ञेया पुत्रकाचार्ययोः स्थिता ।।'**
**(स्व. ४।९०)** इति च।।२६।।

ननु एषां दीक्षया किं कार्य, सा च कस्य कीदृशीत्याशङ्क्य आह

**अभावं भावयेत्सम्यक्कर्मणां प्राच्यभाविनाम् ।**
**मुमुक्षोर्निरपेक्षस्य प्रारब्धेकं न शोधयेत् ।।२७।।**

---

८. यह सबीजा दीक्षा पुत्रक और आचार्य से सम्बन्धित है। सांसारिकता की शान्ति के लिये अनुगृहीत पुत्र को पुत्रक कहते हैं। इसकी दीक्षा को सबीजा दीक्षा कहते हैं। पुत्रक दीक्षा का विधान अलग से देखना चाहिये।।२३-२६।।

प्रश्न करते हैं कि, इनकी दीक्षा की क्या उपयोगिता है? वह हो तो किसकी और कैसी हो इसका निर्णय कैसे हो? इन जिज्ञास्य विषयों पर निश्चित विचार व्यक्त कर रहे हैं—

साधक जिस समय दीक्षा लेता है, उसके साथ दीक्षा से पहले तक के अर्थात् जन्म से लेकर दीक्षा तक के कर्म रहते हैं। इसके साथ ही यह भी एक तथ्य है कि, जन्म से पहले के भी जो कर्म होंगे, वे भी तो साथ ही हो सकते हैं। इसके अतिरिक्त दीक्षा के बाद जो कर्म शिष्य द्वारा किये जाते हैं, उनके कुछ अलग संस्कार शिष्य के व्यक्तित्व के साथ जुटते रहते ही हैं। इनमें दीक्षा के पहले के संस्कार प्राच्य और दीक्षा के बाद होने वाले भावी कर्म होते और करिष्यमाण कहलाते हैं।

दीक्षा का वास्तविक उपयोग यही है कि, इन कर्मों के अभाव का अनुभावन करना चाहिये। किन्तु निरपेक्ष मुमुक्षु के प्रारब्ध कर्मों का शोधन नहीं करना चाहिये। भोग से उनका अन्त आवश्यक है। साधक अर्थात् सबीज बुभुक्षु साधक में कर्मों का शोधन अवश्य करना चाहिये। इसका कारण यही है कि, योग में इनकी उन्मुखता का मार्ग सर्वदा प्रशस्त बना रहे।

**साधकस्य तु भूत्यर्थमित्थमेव विशोधयेत् ।**
**शिवधर्मिण्यसौ दीक्षा लोकधर्मापहारिणी ।।२८।।**

**अधर्मरूपिणामेव न शुभानां तु शोधनम् ।**
**लोकधर्मिण्यसौ दीक्षा मन्त्राराधनवर्जिता ।।२९।।**

प्राच्यभाविनामिति प्राच्यानि दीक्षाया: प्रागिह जन्मान्तरे च उपार्जितानि, भावीनि दीक्षानन्तरमिह करिष्यमाणानि। निरपेक्षस्येति साधकवद्भोगौन्मुख्याभावात्। फलदानोन्मुखस्य वर्तमानस्य पुन: का गतिरित्याशङ्क्य आह प्रारब्धैकं न शोधयेदिति तस्य भोगेनैव अतिवाहनात्। तदुक्तं

'................**येनेदं तद्धि भोगतः।**' इति

साधकस्य च इत्थमेव कर्मशोधनं, किन्तु तत् भूत्यर्थं, तस्य हि भोगौन्मुख्यात् तद्वासनाधिवासितमेव चेत:, अत एव अत्र अनेन वासनाभेदात्फलभेद इति प्रतिज्ञातोऽपि अर्थो निर्वाहित:। यदुक्तं

---

शिवधर्मिका दीक्षा लोक धर्मों का अपहरण करने वाली होती है। जो पुरुष अधर्म का जीवन अपना कर अधर्म रूप ही बने हुए हैं, उनके अशुभ कर्मों का ही शोधन उचित है। शुभ कर्मों का शोधन अनावश्यक है। इसप्रकार की लोक धर्मिणी दीक्षा का पृथक् स्वरूप है। यह मन्त्राराधन वर्जिता होती है। कारिका में आये कुछ स्थल विचारणीय हैं—

१. प्रारब्ध कर्मों का शोधन करना उचित नहीं, यह श्लोक २७ में कहा गया है। इसका कारण है। फल के प्रारम्भ होने पर उनके प्रतिरोध में प्रकृति विरोध होता है। दूसरी बात यह है कि, बचा हुआ फल तो कभी भोगना ही पड़ेगा। अत: भोग लेना ही अच्छा होता है। इससे कर्म का क्षय हो जाता है। भोगादेव क्षय: यह सिद्धान्त भी है। इस विषय में एक और उक्ति भी है—

"............ जिससे यह (प्रारब्ध है), तो इसका भोग से ही (अन्त होगा)"।

२. फल शोधन ऐश्वर्य संवर्द्धन के लिये होना चाहिये। यह श्लो. २८ में उल्लिखित है। भूति सबीज साधक का लक्ष्य होती है। इसलिये वह कर्म

**'साधकस्य तु भूत्यर्थं प्राक्कर्मेत्थं तु शोधयेत्।**
**प्राक्कर्मगामि चैकस्थं भावयित्वा तु दीक्षयेत् ।।'**

(४।१४२) इति

अत्र च उद्द्योतकृता यत् इत्थमिति अपास्य एकमिति पठित्वा देहारम्भिशुभाशुभ-कर्ममध्यादेकमशुभमपि अस्य शोधयेदिति व्याख्यातं, तदुपेक्ष्यमारब्धकार्य-देहारम्भिकर्मोच्छेदाशक्यत्वस्य प्रागुपपादितत्वात् क्वचिदप्येवमनाम्नातत्वाच्च।

---

का शोधन करता है। वासना भेद से फल भेद होता है— यह पहले कहा गया है। इस कथन की चारितार्थता भी इसी में है। यदि साधक ऐश्वर्य की कामना करता है, उसी में उसकी वासना है, तो उसे कर्म शोधन कर उत्तम फल प्राप्ति का प्रयत्न करना ही चाहिये। इस विषय में लिखा गया है कि,

"साधक की (समृद्धि) भूति के लिये प्राक् कर्म को (इत्थं) इस प्रकार शोधन करना चाहिये। गुरु का यह उत्तर दायित्व होता है कि, दीक्षा देने के पहले के कर्मों के परिवेश में फँसे इस शिष्य को भावित कर (उद्धार हेतु ही) दीक्षा दे"।

३. "इत्थं" शब्द के स्थान पर 'उद्योतकार' ने 'एकं' पाठ स्वीकार कर यह अर्थ किया है कि, देहों से आरब्ध शुभाशुभ कर्मों की शृङ्खला में से किसी एक अशुभ का शोधन करना चाहिये। इस प्रकार की 'एकं' पाठ के आधार पर व्याख्या की है। आचार्य जयरथ का मत है कि, इस मत का बहिष्कार कर देना चाहिये।

प्राक् कर्म दो प्रकार के होते हैं। १. शिष्य की उत्पत्ति से अर्थात् जन्म से लेकर दीक्षा पर्यन्त कर्म। २. शिष्य के जन्म के पहले के और जन्मान्तरों के भी बचे हुए कर्म। दीक्षा के बाद के कर्म पश्चात् भावी कर्म होते हैं। इनमें से किसी कर्म का उच्छेद असम्भव माना जाता है। शोधन से कुछ दिन के लिये फलप्रदता अवरुद्ध भर होती है। इसीलिये फल भोग लेने को ही अच्छा माना जाता है। फल दो प्रकार के ही होंगे—शुभ या अशुभ। जो वासना वासित चेता है, वह भी शुभस्थ ही रहना चाहता है। पर चाहने

**'तस्येच्छा या स्मृता शक्तिः पीठत्वं समुपागता ।**
**पीठमाधारभूतं स्यात्तत्रस्थं सचराचरम्।।**
**तेन पीठाभिधानं तु शक्तेर्नैमित्तिकं स्मृतम् ।'** इति।

अग्न्यमिति मुख्यम्, अत एव कामस्य इच्छाया रूपमित्युक्तम्। तत इति अग्र्यात् कामरूपात्। तदुक्तं तत्र

**'ततः पीठद्वयं जातं बिन्दुनादमयं प्रिये।**
**वामे बिन्दुर्विनिर्दिष्टो दक्षिणे नाद उच्यते।।**
**अग्रपीठं तु पूर्वोक्तं शाक्तं तु परमेश्वरि ।**
**एवं पीठत्रयं जातं कामरूपादि यत्स्मृतम्।।**
**अग्न्यं तत्कामरूपंस्याद्दक्षे पूर्णगिरिः स्मृतः ।**
**उड्डीयानाभिधानं तु उत्तरे तु तृतीयकम् ।।**इति।

---

२. अग्न्यं— अग्रस्यभावोऽग्न्यम्। इस विग्रह के अनुसार काम ही मुख्य तत्त्व माना जाता है। यह इच्छा का प्रतीक है। इसीलिये अग्रिम श्रेणी में कामरूप को ही रखते हैं। कामरूप के सम्बन्ध में कहा गया है कि,
इच्छा स नाद और बिन्दु नामक दो पीठों का उल्लास हुआ। वाम भाग में बिन्दु को निर्दिष्ट किया गया है और दक्षिण में नाद का अवस्थान हैं। यह शाक्त अग्रपीठ है। इसमें इच्छा, बिन्दु और नाद आते हैं। इन्हीं से तीन मुख्य पीठ प्रसिद्ध हुए। १. अग्र्य कामरूप, २. दक्षिण में पूर्णगिरि और ३. उड्डीयान नामक पीठ उत्तर में अवस्थित है।

३. श्लोक ८६ में अर्धपीठ को ज्ञेय संकल्पना रूप माना गया है। अर्ध आधा भाग आन्तर और बाह्य भेद के आधार पर कहा गया है। इसे वृत्तिकार अनागमिक, अनार्ष अतएव उपेक्ष्य मानते हैं।

४. वेदकल— वेद का अर्थ चार होता है। चार कलाओं वाला चतुष्कल बिन्दु होता है। इसको मिलाकर तीन अर्धपीठक माने जाते हैं। कहा गया है कि, "शक्ति से शाक्त महापीठ का उल्लास हुआ। कुण्डलिनी पीठ मध्यग पीठ हुआ और बिन्दु से चतुष्कल वैन्दव पीठ उल्लसित हुआ। नादज का ही

'ज्ञेयसंकल्पनारूपमर्धपीठमतः परम्।' इति अर्धं 'नवधा कथितं पीठमन्तर्बाह्यक्रमेण तत्।' इत्युपसंहारविरुद्धमनागमिकं चेत्यनार्षत्वादुपेक्ष्यम्। वेदकलश्चतुष्कलो बिन्दुः। त्र्युपपीठकमिति त्रयाणामुपपीठानां समाहारः। तदुक्तं तत्र

**'शक्तेः शाक्तं महापीठं कौण्डलीपदमध्यगम् ।**
**बिन्दोस्तु बैन्दवं पीठं चतुष्कलमगोलकम् ।।**
**नादजं व्याप्त्यधो ज्ञेयं द्विरन्द्रस्योर्ध्वगं प्रिये।**
**उपपीठत्रयं ह्येतद्बाह्यतः शृणु नामतः ।।**

---

दूसरा नाम लालन है। यह व्याप्ति के अधो भाग और द्विरन्ध्र के ऊपर अवस्थित है। उपपीठ के रूप में देवी कोट्ट शाक्तपीठ, वैन्दव उज्जयिनी पीठ और कुलगिरि व्याप्ति विषयक पीठ है। व्याप्ति के साथ अधोगति विशेषण साभिप्राय प्रयुक्त है। कुंडलिनी अधोभाग में ही जाकर सुषुप्त हो जाती है। यों व्याप्ति भी शक्ति ही है। इसको प्रसर का रूप मानते हैं।

५. सन्दोह— श्लोक ८७ में प्रयुक्त शब्द है। दोह-- निष्पन्न रूप ही होता है। उपपीठ से निष्पन्दमान होने के कारण इसे 'सन्दोहक' कहते हैं। कहा गया है कि,

"इसी प्रकार सन्दोह भी तीन ही गिनाये गये हैं। ललनागर्त्तक अर्थात् लालन सन्दोहक शाक्त, वैन्दव सन्दोहक पुटमध्य अवस्थान वाला और व्यप्ति नादज होता है। पर यह कथन अनुभव और शास्त्रविरुद्ध है। व्याप्ति कुण्डलिनी से सम्बन्धित सन्दोहक होता है। नादज संदोहक लालन सन्दोहक होता है, व्याप्ति नहीं। इस प्रकार पीठ, उपपीठ और सन्दोहक भेद से पीठों के भेद होते हैं।

६. क्षेत्राष्टक— हृदय कमल के पत्रों को ही क्षेत्राष्टक कहते हैं। दल के अग्रभाग उपक्षेत्र और पत्रों की सन्धियाँ सन्दोह मानी जाती हैं। क्षेत्र, उपक्षेत्र और सन्दोह मिल कर २४ होते हैं। इसी उपक्रम में यह भी कहा गया है कि, "खेटक कुरुक्षेत्र सन्दोह के अन्तर्गत आते हैं। ये वीर नायक संज्ञक भी हैं।"

**देवीकोट्टं स्मृतं शाक्तं बिन्दुश्चोज्जयिनी स्मृता।**
**कौलो गिरिः स्मृतो मध्ये व्यापिन्यां व्याप्त्यधोगतिः ।।'** इति ।

व्याप्तिः शक्तिः प्रसरस्थानमिति। संदोहकेति उपपीठनिःष्यन्दप्रायत्वात्। तदुक्तं तत्र

**'पुनः संदोहसंज्ञास्तु त्रयस्त्वेते वरानने ।**
**ललनागर्तकं शाक्तं बैन्दवं पुटमध्यतः ।।**
**नादजं व्याप्तिमध्यस्थं त्रयस्त्वेते समासतः ।**
**पुण्ड्रवर्धनसंज्ञस्तु ललनायामुदाहृतः ।।**
**वारेन्द्रं बैन्दवं ज्ञेयमेकाम्रं व्याप्तिसंज्ञितम् ।'** इति

नवधेति त्रयाणां पीठोपपीठसंदोहानां त्रैविध्यात्। पुरीति राजपुरी। मायाख्येति मायापुरी। तदुक्तं तत्र

---

७. नासान्ततालु रन्ध्रान्त रहस्य— (श्लो. ९४)

अ. द्विपथ या द्विपद— वाम और दक्ष (इडा और पिङ्गला) नाडियों से प्राणापानवाह की प्राकृतिक व्यवस्था है।

आ. चतुष्पथ— व्याप्ति (कुण्डलिनी के अधोभाग में अवस्थित भ्रूमध्य का महत्त्वपूर्ण स्थान । इससे सम्बन्धित नासान्त तालु और रन्ध्रान्त इन शब्दों को स्पष्ट रूप से योगी को समझ लेना चाहिये। ये योग की प्रक्रिया में आने वाले शब्द हैं। नासा का दूसरा नाम शक्ति भी है। इसके अन्त को व्याप्ति भी कहते हैं। इस तरह नासान्त शब्द का अर्थ व्याप्ति अर्थात् कुण्डलिनी भी होता है। नासा का अर्थ नासिका लेने पर नासान्त नासिका से चितिकेन्द्र तक का भाग आता है। आमावस्य से पौर्णमास पथ में तालु और रन्ध्रान्त भाग अर्थात् चूलिका भी आती है। इसी को शास्त्रकार कहते हैं— एतद्देहे व्यवस्थितम् (श्लो. ९४)

'क्षेत्राष्टकं तु पत्राणि हृत्पद्मस्य वरानने ।
उपक्षेत्रा दलाग्राणि संदोहा दलसन्धयः ।।
चतुर्विंशतिरेवं स्यात्........................... ।'

इत्युपक्रम्य नामोद्देशेन

'खेटकं च कुरुक्षेत्रं संदोहा वीरनायकाः ।'

इत्यन्तम्। द्वयेति वामदक्षनाडीलक्षणस्य। त्रयेति मध्यशक्त्या सह। शक्तिमत इति आत्मनः। नासान्तेति नासायाः शक्तेरन्तो व्याप्त्यादिशब्दव्यपदेश्यं प्रसरस्थानम्। रन्ध्रेति ब्रह्मरन्ध्रस्य अन्तश्चूलिकाग्रम्। मध्यममिति आणवम्। कौलिकमिति शाक्तम्, अर्थादाद्यं शाम्भवम्। तदेवेति नासान्तादिप्रकारमपि। तदुक्तं तत्र

'द्विपदं वामदक्षाभ्यां नाड्योर्वाहः परो मतः ।
त्रिपथं परया प्रोक्तं तदेव तु विशिष्यते ।।
यत्तत्पूर्वं समाख्यातं व्याप्त्यधः पिण्डमुत्तमम।
चतुष्पथं तु तत्रैकं द्वितीयं तालुमध्यतः।।
तृतीयं चूलिकाग्रे तु त्रिकं तत्तु विजानत।
भ्रूमध्ये तु परं प्रोक्तं चतुष्पथमतः परम्।।'

इत्यादि अनेकप्रकारम्। ननु एतत्शास्त्रान्तरेष्वपि

'प्रयागो नाभिसंस्थस्तु वरणा हृत्प्रदेशतः ।
कुलाद्रिः कण्ठसंस्थस्तु भीमनादस्तु तालुकः ।।

---

अन्य शास्त्रों में भी इस विषय में पर्याप्त रूप से लिखा गया है कि, "प्रयाग नाभि देशस्थ क्षेत्र है। वरणा तो हृदय ही है। कुलगिरि कण्ठ में अवस्थित है। भीमनाद अर्थात् अट्टहास तालुस्थानीय है। जयन्तिका का स्थान बिन्दु है। नाद में वाराणसी (चरित्रवन), शक्ति मध्य में एकाम्र अवस्थित है— यह विज्ञ पुरुषों को जानना चाहिये। ये सारी बातें गुरुमुख से प्राप्त और प्रोक्त हैं। ऐसे करोड़ों क्षेत्र इस अष्टक में आते हैं।"

बिन्दुस्थाने जयन्त्याख्यं नादाख्ये तु चरित्रकम् ।
एकाम्रं शक्तिमध्ये तु ज्ञातव्यं विदितात्मकैः ।।
गुरुवक्त्रगतं प्रोक्तं कोटिवर्षं तथाष्टमम् ।'

इत्यादिना अन्यथा उक्तं, तत्किमनेन एवंविधेन उपदिष्टेन स्यात्। तात्पर्यमेव अत्र किंचिदुच्यतां, बाढमित्याह किं वेत्यादि। ततः प्राणगमिति संविदः प्रथमं प्राणे परिणामात्। तस्मादिति देहे एव पीठादेरवस्थानात् हेतोः।।९२-९६।।

ननु यदि एवं स्वदेहायतनगेनैव भाव्यं, किं तद्बाह्यस्य पीठादेर्वचनेनेत्याशङ्क्य आह

**बाह्ये तु तादृशान्तःस्थयोगमार्गविशारदाः ।।९७।।**
**देव्यः स्वभावाज्जायन्ते पीठं तद्बाह्यमुच्यते ।**

देव्यो हि स्वभावत एव समनन्तरोक्तव्याप्त्या आन्तरज्ञानयोगादिवैचक्षण्यात् बाह्ये जायन्ते बहिरनुग्रहनिमित्तमभिव्यक्तिमासादयन्तीति पीठं बाह्यमुच्यते तथाभिधातुमुचितमित्यर्थः।।९७।।

---

इन सन्दर्भों को समझा कर और निर्देश कर शास्त्रकार आगे कहते हैं कि, यह सब कुछ देह में ही अवस्थित है। पहले संवित्ति में फिर प्राण में, पुनः देह में अर्थात् पिण्ड और ब्रह्माण्ड में यह सब उल्लसित है। इसका विचार दीक्षा प्रकरण में अत्यन्त आवश्यक है।।९२-९६।।

प्रश्न उपस्थित होता है कि, सब कुछ समझकर देहायतन की साधना ही जब करनी चाहिये क्योंकि सब कुछ इसी में अवस्थित है, तो इन बाह्य पीठ आदि के कथन या अवगम की क्या आवश्यकता? इस पर कह रहे हैं कि,

पूर्वोक्त वर्णित प्रकार और विधि के अनुसार आन्तरिक संवित्तिरूपयोगमार्ग के वैचक्षण्य में दक्ष देवियाँ स्वभावतः बाह्य प्रतीकों में अभिव्यक्त और उल्लसित होती हैं। यह बाह्य प्रतीक ही पीठ कहे जाते हैं। इसलिये पीठ का अवगम भी अनिवार्य है।

ननु देव्यश्चेदेवं, तावता बहिः पीठत्वं कुतस्त्यमित्यशङ्कां दृष्टान्तप्रदर्शनेन उपशमयति—

**यथा स्वभावतो म्लेच्छा अधर्मपथवर्तिनः ।।९८।।**
**तत्र देशे नियत्येत्थं ज्ञानयोगौ स्थितौ क्वचित् ।**

यथा स्वभावतो म्लेच्छानामधर्मपरत्वात् तद्देशे एव नियमेन इत्थमधर्म एव सर्वजनविषयतया वर्तते, तथा ज्ञानयोगशालित्वात् देवीनां तदभिव्यक्तिस्थाने क्वचित्पीठादावेव, नतु सर्वत्र, ज्ञानयोगादीति युक्तमुक्तं तत्पीठमुच्यते इति।।९८।।

ननु एवं तत्र चेत् ज्ञानयोगादि स्थितं, तावता अन्येषां किं भवेदित्याशङ्कामुपशमयितुं दृष्टान्तयति

**यथाचातन्मयोऽप्येति पापितां तैः समागमात् ।।९९।।**
**तथा पीठस्थितोऽप्येति ज्ञानयोगादिपात्रताम् ।**

---

देवियों की इस तरह बाह्यरूप में अभिव्यक्ति में उनका अनुग्रह ही कारण है। अनुग्रह के प्रतीक ही ये आधारपीठ है। इन्हें पीठ कहना इसी लिये उचित भी है और इनका स्वाध्याय भी आवश्यक है।।९७।।

प्रश्न है कि, यदि ये देवियाँ ऐसी उत्कृष्ट गुणशालिनी हैं, तो इनका बहिः पीठत्व के प्रति क्या आकर्षण है कि, ये स्वभावतः बाह्य भाव से ही अभिव्यक्त होती हैं? दृष्टान्त से इस आशङ्का का उपशमन कर रहे हैं—

जैसे म्लेच्छ स्वभाव से ही अधर्म के मार्ग का अनुसरण करते हैं, और नियमतः उस देश में अधर्म का आचरण भी सर्वजन-विषय बन जाता है; उसी तरह ज्ञान और योग शालिनी ये देवियाँ ज्ञान और योग की अभिव्यक्ति के स्थान रूप पीठ में अभिव्यक्त होती हैं। ये सर्वत्र व्यक्त नहीं होतीं। ज्ञान और योग मय दिव्य शक्तियों के बाह्य आधार को इसीलिये पीठ कहते हैं।।९८।।

मान लिया कि, इस प्रकार वहाँ ज्ञान और योग आदि स्थित हैं, इससे दूसरों का क्या लाभ हो जाता है? इस आशङ्का का उपशमन भी दृष्टान्त के माध्यम से कर रहे हैं—

अतन्मयो निष्पापः, ज्ञानयोगादिबहिष्कृतश्च। तैः पापिभिः, पीठस्थितैश्च।।

ननु पीठादेरबहिर्भ्रमणात् यदि एवं ज्ञानयोगादि सिद्ध्येत्, तत्किमन्तरनुसन्धाने-नेत्याशङ्क्य आह

**मुख्यत्वेन शरीरेऽन्तः प्राणे संविदि पश्यतः ।।१००।।**
**विश्वमेतत्किमन्यैः स्याद्बहिर्भ्रमणडम्बरैः ।**

शरीरादेश्च यथायथमान्तरत्वं विवक्षितम् ।।१००।।

स च अयं पीठादेर्बुभुक्ष्वेकविषयो भेद इत्याह

**इत्येवमन्तर्बाह्ये च तत्तच्चक्रफलार्थिनाम् ।।१०१।**

---

जैसे अतन्मय अर्थात् उसके समान पाप में लिप्त न रहने वाला भी पापी के साथ समागम से पाप भाव को पा लेता है। उसी तरह पीठ में स्थित व्यक्ति भी पीठ के समागम से ज्ञान और योगादि की योग्यता प्राप्त कर लेते हैं।।९९।।

प्रश्न करते हैं कि, यह तो बड़ी अच्छी बात है। पीठ आदि में बाहर भ्रमण करने मात्र से ही यदि ज्ञान योग आदि की सिद्धि हो जाती है तो, फिर आन्तर अनुसन्धान आदि साधना की क्या आवश्यकता? पीठ भ्रमण से ही कल्याण अवश्यम्भावी हो जायेगा? इस पर कह रहे हैं कि,

मुख्य रूप से शरीर में आन्तर अनुसन्धान के माध्यम से प्राण को और संविद् को जो साक्षीभाव से साक्षात्कृत कर लेता है, उसके लिये यह विश्व भी संविदतिरिक्त कुछ नहीं रह जाता। उसके बाह्य पीठादि भ्रमण के आडम्बर से क्या लाभ? अर्थात् संवित् तत्त्व की प्राक् प्राण में परिणति, पुनः प्राण का देहावस्थान, फिर पिण्ड और ब्रह्माण्ड में अभिव्यक्ति, यह सब साक्षिभाव से प्रत्यक्ष करने वाला ही महत्त्वपूर्ण योगी होता है। यथाक्रम सब का रहस्य उद्घाटित हो जाता है और साधक धन्य हो जाता है।।१००।।

इस प्रकार आन्तर अनुसन्धान संलग्न साधक उन चक्रों के चमत्कार पूर्ण चंक्रमण से उनके समागम का फल प्राप्त करता है। इससे यह भी स्पष्ट होता है कि, वह फलार्थी है अर्थात् बुभुक्षु है। बाहर पीठों में भ्रमण करता है, तो इन

**स्थानभेदो विचित्रश्च स शास्त्रे संख्ययोज्झितः ।**

स्थानभेद इति अत्र च्छेदः। स चेति स्थानभेदः शास्त्रे इति शैवे।।१०१।।

तदेव दर्शयति

**श्री वीरावलिहृदये सप्त स्थानानि शक्तिकमलयुगम्।।१०२।।**

---

पीठों से भी कुछ चाहता ही होगा। ऐसे अन्तर्बाह्य भ्रमण के डम्बर में पड़ने वाले व्यक्तियों के लिये यह स्थानकृत भेद महत्त्वपूर्ण होता है। इन्हें वैचित्र्य के इन्द्रजाल से आकृष्ट भी करता है। शास्त्रों में इनके असंख्य भेद हैं। संख्या की सीमा से ये रहित हैं। बुभुक्षु को इस असीम फलार्थानुसन्धान से सावधान रहना चाहिये।।१०१।।

श्रीवीरावलिहृदय नामक ग्रन्थ में सात स्थान शरीर और शरीर से बाहर के निर्दिष्ट हैं। वे इस प्रकार हैं—

१-२. शक्तिकमल युगल, ३. सुरपथ, ४. चतुष्पथ, ५. श्मशान, ६, एकान्त, ७. शून्यवृक्ष। शक्तिकमल को दो मान कर ये सात भेद किये गये हैं। निर्वचन, गुण, स्थिति और उपचार इन चार दृष्टियों से विबोध के लक्ष्य की प्राप्ति की जाती है। बोध से अधिष्ठित शरीर के चक्रों में और बाहर इस प्रकार का याग होता रहता है।

स्थानों की संज्ञायें ही स्थानों की परिभाषा को स्पष्ट कर रहीं हैं। जैसे—

१. शक्तिकमल— वह स्थान है, जहाँ शक्ति कमल की तरह स्वयम् अधिष्ठित है। यह 'कमल दूसरा कुछ नहीं स्त्री पुरुष के जन्म की आधार इन्द्रियों का मूल बिन्दु होता है। जिस तरह कमल से सौन्दर्य, मकरन्द, पराग और किंजल्क की आन्तरिक और बाह्य सृष्टि होती है। उसी तरह स्त्री और पुरुष के जन्माधार रूपी कमल से विश्व की सृष्टि होती है। इसके दो स्थानों पर होने से इसे दो मान कर ही सात स्थानों की गणना की गयी है।
२. सुरपथ को त्रिपथ भी कहते हैं। ब्रह्मा, विष्णु और रुद्र इन देवों के ही तीन मार्ग निर्धारित हैं। एक शब्द में इसे सुरपथ की संज्ञा दे दी गयी है।

**सुरपथचतुष्पथाख्यश्मशानमेकान्तशून्यवृक्षौ च ।**
**इति निर्वचनगुणस्थित्युपचारदृशा विबोध एवोक्तः ।१०३।**
**तदधिष्ठिते च चक्रे शारीरे बहिरथो भवेद्यागः ।**

शक्तीति तदुदयस्थानं जन्माधारः। सुपथेति सुराणां ब्रह्मविष्णुरुद्राणां त्रित्वात् त्रिपथम्। शून्येति अन्याभावादेकवृक्षः। यदुक्तम्

**'एकवृक्षः शिवः प्रोक्तः ............।'**इति।।

निर्वचनेनेति यतो विबोध एव अनुग्राह्याणां वरणात्पाशानां च क्षपणात् वृक्ष उक्तः। गुणस्थितीति अन्यवैविक्त्यादेकान्त इव एकान्तः। उपचारेति

**'तथाप्यस्य परं स्थानं हृत्पङ्कजसमुद्गकम्।'**

---

३. चतुष्पथ— श्लोक ९४ में चतुष्पथ का वर्णन आ चुका है। इसका अर्थ वहाँ स्पष्ट किया गया है।

४. श्मशान— शवदाह स्थान। 'पंचमहाभूतों को उनके पूर्व रूप में लाने के लिये यहाँ अग्नि का आश्रय लेते हैं। महा श्मशान वाराणसी को कहते हैं।

५. एकान्त— समस्त सांसारिकता के आकर्षणों से शून्य निर्जन वह स्थान जहाँ साधक अकेले अपनी साधना सम्पन्न करता है।

६. शून्य वृक्ष— अन्य किसी पदार्थ के न रहने के कारण एकान्त शून्य में वृक्ष अकेला ही होता है। वृक्ष की नैरुक्त प्रक्रिया से व्युत्पत्ति करने पर इस का अर्थ शिव होता है। एक स्थान पर लिखा है कि,

"एकवृक्ष शिव को ही कहते हैं................।" वृक्ष में व् + ऋ + क्ष तीन वर्ण हैं। व से वरण करना, ऋ से ज्ञान और क्ष से क्षय इन तीनों का यह एकत्र प्रयोग है। ज्ञान के वरण और पापों के क्षय का जो कारण है, वह वृक्ष है। पापों का क्षय शिव से होता है। अत: एकवृक्ष शिव ही कहे जाते हैं। इस नैरुक्त व्युत्पत्तिमयी व्याख्या में निर्वचन दृष्टि का आश्रय लिया गया है।

इत्युक्त्या तात्स्थ्यात् हृत्कमलं 'मञ्चाः क्रोशन्ति' इतिवत्। एवमन्यत्रापि ज्ञेयम्। तदधिष्ठित इति तच्छब्देन विबोधपरामर्शः।।१०२-१०३।।

अत एव बोधस्य सर्वत्र अविशेषात् तदैकात्म्यापत्तिरूपायां मुक्तौ न काचित् स्थानभेदकल्पनेत्याह

**मुक्तये तत्र यागस्य स्थानभेदः प्रकल्प्यते ।।१०४।।**
**देशोपाया न सा यस्मात्सा हि भावप्रसादतः ।**

---

जहाँ तक गुणों और स्थितियों का प्रश्न है, इन दोनों के आधार पर ही प्रत्येक व्यक्ति किसी पदार्थ की उपयोगिता को निर्धारित करता है। इसी तरह चौथी उपचार दृष्टि भी है। कहा गया है कि,

"फिर भी इसका सर्वोत्कृष्ट स्थान मुद्रायुक्त हृदय कमल ही है। समुद्र मुद्रायुक्त और सागर दोनों अर्थों में यहाँ प्रयुक्त है। यहाँ तात्स्थ्य दृष्टि से उपचार है। हृदय वहाँ है। कमलवत् है। अतः 'हृदय कमल' शब्द का 'मञ्च बोलते हैं' की तरह उपचारात्मक प्रयोग सार्थक दृष्टि से होता है। यही चार दृष्टियाँ हैं। जिनसे उक्त सातों स्थानों की महत्ता स्पष्ट होती है।

तदधिष्ठित शब्द का प्रयोग ऊपर के प्रसङ्ग में आया हुआ है। यहाँ तत् (उस) शब्द से विबोध का ही परामर्श करते हैं। अर्थात् साधना में साधक को वह जहाँ कहीं भी हो. चाहे चक्रों की आन्तर योग-यात्रा में हो या बाहर के स्थान में हो, सभी विबोध का परिवेश ही है, यह ध्यान देना चाहिये।।१०२-१०३।।

विबोध, अनुग्रह योग्य व्यक्तियों को अनुग्रहीत करने के साथ ही उनका वरण भी करता है। विबोध उनके पाशों का क्षय भी करता है। क्योंकि ईश का यह अनुग्रह सर्वत्र उपलब्ध है। इसलिये मुक्ति के लिये किसी याग के स्थानकल्पन की कोई आवश्यकता नहीं। मात्र विबोध ही पर्याप्त है। यह भगवान् भूतभावन का प्रकाश विग्रह है। इसके साक्षात्कार से मुक्ति हस्तामलकवत् हो जाती है। यही कह रहे हैं कि,

न च एतद् न्यायैकशरणमित्याह

**उक्तं च श्रीनिशाचारे सिद्धिसाधनकाङ्क्षिणाम्।।१०५।।**
**स्थानं मुमुक्षुणा त्याज्यं सर्पकञ्चुकवत्त्विदम् ।**
**मुक्तिर्न स्थानजनिता यदा श्रोत्रपथं गतम् ।।१०६।।**
**गुरोस्तत्त्वं तदा मुक्तिस्तद्दार्ढ्याय तु पूजनम् ।**

इदमिति नियतं पीठाद्यात्म स्थानम्। यदुक्तं तत्र

---

ऐसी स्थिति में मुक्ति के लिये किसी याग के स्थान भेद की प्रकल्पना नहीं होती। यह देशगत उपायों के वश की बात नहीं है। प्रकाश की चराचर व्यापिनी चेतना देश के सीमित परिवेश में नहीं रह सकती। अत: इसे देशोपाय से बहुत ऊपर मानते हैं। यह तो मात्र भाव के प्रसाद से ही समासादित हो सकती है। इसलिये इस साधना में भाव की प्रधानता होती है।।१०४।।

यह उक्ति मात्र नीतिगत आधार पर ही नहीं कही जा रही है। वरन् इसका आगमिक प्रामाण्य भी उपलब्ध है। वही कह रहे हैं कि,

श्री निशाचर शास्त्र इस सिद्धान्त की पुष्टि करता है। सिद्धियों में सर्वोत्तम मुक्तिरूपा सिद्धि की आकाङ्क्षा रखने वाले साधकों से सम्बन्धित विधान वहाँ वर्णित हैं। उनमें मुमुक्षुओं को यह निर्देश दिया गया है कि, मुमुक्षु द्वारा स्थान अर्थात् पीठ आदि का उसी प्रकार परित्याग कर देना चाहिये जैसे सर्प अपनी केंचुली का परित्याग कर देता है। यह ध्रुव सत्य है कि, मुक्ति स्थान जनिता नहीं होती। किसी स्थान विशेष से मुक्ति का कोई सम्बन्ध नहीं होता।

पूज्य गुरुवर्य के वागमृत के प्रतीक तत्त्ववत् मन्त्र जब भी श्रोत्र में (कान) में पड़ते हैं, उसी समय मुक्ति सुलभ हो जाती है। इसी की दृढ़ता के लिये पूजन का विधान होता है। पूजा का लक्ष्य मुक्ति की दृढ़ता ही है।

श्लोक १०६ की पहली अर्धाली में इदम् शब्द का प्रयोग किया गया है। वह पीठ आदि स्थान का ही विशेषण है। इस सम्बन्ध में निशाटन तन्त्र कहता है कि,

**'कथितं पूर्वमेवं यन्मया तुभ्यं वरानने।**
**सिद्धिसाधनकं ह्येतद्विधानं सिद्धिकाङ्क्षिणाम्।।**
**मोक्षार्थी सर्वमेतत्तु सर्पकञ्चुकवत्त्यजेत्।**
**मुक्तस्तेनैव कालेन यदा श्रोत्रपथं गतम् ।।**
**गुरोर्वक्त्राद्विनिर्यातं ज्ञानं परमदुर्लभम्।**
**सकृज्ज्ञात्वा स्वसंवित्तिं किमन्यत्तु जिगीषति ।।'**

इति।।१०५-१०६।।

ननु निरधिकरणस्तावद्यागो न भवेदिति मुमुक्षुणापि स्थानभेदोऽवश्याश्रयणीयः, तत्कथमेतदुक्तं मुक्तये यागस्य न स्थानभेद इतीत्याशङ्क्य आह

**यत्र यत्र हृदम्भोजं विकासं प्रतिपद्यते ।।१०७।।**
**तत्रैव धाम्नि बाह्योऽन्तर्यागश्रीः प्रतितिष्ठति ।**

---

"भगवान् शंकर पार्वती को सम्बोधित कर रहे हैं कि, हे समुखि प्रिये! तुमको मैंने पहले ही इस विषय में उपदेश किया है कि, सिद्धि की आकांक्षा करने वाले लोगों की सिद्धि का साधक यह उक्त विधान है किन्तु मुमुक्षु साधक को इसका उसी तरह परित्याग करना चाहिये जैसे सर्प अपना पुराना निरुपयोगी निर्मोक उतार फेंकता है।

मुक्ति तो उसी समय प्रत्यक्ष होने लगती है, जिस समय गुरु के मुखारविन्द से मकरन्द-रस के समान उपदेश का अमृत शिष्य के कानों में आ पड़ता है। उस वाक् सुधा से उसका हृदय अभिषिक्त हो उठता है। उपदेश के प्रभाव से स्वात्म संवित्ति में उद्रेक हो जाता है। शिष्य एक बार उसे जान भर ले, इतना ही पर्याप्त है। इससे बढ़ कर कोई तत्त्व विजिज्ञासितव्य नहीं होता।।१०५-१०६।।

प्रश्न है कि कोई याग विना किसी आधार के विहित नहीं होता। इसलिये मुमुक्षु द्वारा भी ज्ञान यज्ञ के लिये किसी विशेष स्थान का आश्रय लेना ही चाहिये। फिर यह क्यों लिखा गया कि, मुक्ति के लिये याग स्थल की कोई उपयोगिता नहीं? इस पर कह रहे हैं—

ननु तत्रापि पीठादिगमनेन सौकर्यं किं न स्यादित्याशङ्क्य आह

**नान्यत्रगत्या मोक्षोऽस्ति सोऽज्ञानग्रन्थिकर्तनात् ।१०८।**
**तच्च संविद्विकासेन श्रीमद्वीरावली पदे ।**

तदिति अज्ञानग्रन्थिकर्तनम्। नच स्वोपज्ञमेवोक्तमित्युक्तं श्रीमद्वीरावलीपदे इति।।१०८।।

गुरूणां पुनरयमाशयो यदुभयत्रापि भावप्रसाद एव निमित्तमित्याह

**गुरवस्तु विमुक्तौ वा सिद्धौ वा विमला मतिः।१०९।।**
**हेतुरित्युभयत्रापि यागौको यन्मनोरमम् ।**

---

जहाँ जहाँ हृदय का अरविन्द मुकुल से प्रसून बन कर पूर्णरूप से खिल उठता है, वहीं वहीं उसी धाम रूपी बाह्य दिव्य स्थान में अन्तर्याग की लक्ष्मी प्रत्यक्ष साक्षात् मानो मुक्ति के विग्रह रूप में प्रतिष्ठित हो जाती है।।१०७।।
इस पर पुनः यह शङ्का कर रहे हैं कि, इस स्थिति में भी पीठ आदि का आश्रय लेने से सौकर्य और सौविध्य तो हो ही सकता है? यह क्यों नहीं स्वीकार करते? इसका उत्तर दे रहे हैं—

मोक्ष किसी पीठ आदि दूसरे स्थान का आश्रय लेने से नहीं मिला करता। मोक्ष तो वस्तुतः अज्ञान की गाँठ के काट कर फेंक दिये जाने पर ही उपलब्ध होता है। यहाँ कर्त्तन शब्द का प्रयोग सार्थक है। गाँठ के खुलने पर पुनः गाँठ की सम्भावना रहती है पर अज्ञान का धागा जब काट दिया जाता है, तो उसे पुनः जोड़ने का कोई प्रश्न ही नहीं होता। और यह ग्रन्थिभेदन संविद् तत्त्व के विकास से ही सम्भव है। यह सत्य श्रीमद्वीरावली नामक शास्त्र में वर्णित है। उपनिषद् की भाषा में यही भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्व संशयाः, श्लोक रूप से व्यक्त किया गया है।।१०८।।

किसी सिद्धान्त की स्थापना के लिये गुरुजनों के जो आदेश होते हैं, उनका आशय शब्द में नहीं, उसके अर्थ और भाव की ओर निहित होता है। यही बात याग के पक्ष में लागू होती है। चाहे भोग की सिद्धि हो यो मोक्ष की उपलब्धि का प्रश्न हो, दोनों स्थानों पर भाव प्रसाद का प्राधान्य होता है— यही कह रहे हैं—

यत् मनोरमं, तत् यागौक इति विधिः। अत एव तत्र तत्र अविशेषेणैव

**'तत्रादौ यागसदनं शुभक्षेत्रे मनोरमम्** ।'इति,

तथा

**'एकान्ते विजने रम्ये......................** ।'इति,

तथा

**......................यत्र वा रमते मनः।'**

इत्युक्तम्।।१०९।।

---

पूज्य गुरुजनोंकी यह मान्यता है कि, चाहे विमुक्ति की मनीषा हो या सिद्धि की समीहा हो, इन दोनों के उद्देश्य की पूर्ति में कारण विमल मति मात्र ही है। इसी लिये 'याग स्थान वही उत्तम होता है, जहाँ अपना मन रम जाय, जो मनोरम हो' यह उक्ति प्रचलित हो गयी है।

एक तरह की यह विधि ही है कि 'यागगृह वही है, जो मनोरम हो'। इसीलिये स्थान स्थान पर इस सम्बन्ध में शास्त्रों में निर्देश हैं। यहाँ तीन उद्धरण दे रहे है—

१. ''दीक्षा के आरम्भ में यागसदन का चयन होना चाहिये। इसमें दो बातें मुख्यतया विचारणीय हैं। १. शुभक्षेत्र में होना चाहिये। २. सदन शब्द का विशेषण मनोरम शब्द है। इससे यह सिद्ध होता है कि, मन जहाँ रम जाये, वही सर्वोत्तम स्थान है। यह दृष्टि मुख्य रूप से मान्य है''

२. 'याग सदन एकान्त में हो, निर्जन, स्थान हो और सबसे प्रधान दृष्टि है कि, वह रम्य हो''। रम्यता वहीं होती है। जहाँ मन रम जाता है।

३. ''अथवा जहाँ मन रमा होता है'' (वही स्थान योगसदन के लिये सर्वोत्तम है)

इन उद्धरणों से भावप्रसाद का प्राधान्य ही सिद्ध होता है। इसलिये याग स्थान वहीं बनना चाहिये, जहाँ मन रम जाय। यही उत्तम दृष्टि है।।१०९।।

ननु तत्तद्देशकालादिसामग्रीवशेन सा सा सिद्धिः समुन्मिषतीति सर्वत्र उक्तं, तत्कथं तत्र भाववैमल्यमेव निमित्ततां यायादित्याशङ्क्य आह

**नियतिप्राणतायोगात्सामग्रीतस्तु यद्यपि ।।११०।।**
**सिद्ध्यो भाववैमल्यं तथापि निखिलोत्तमम् ।**

ननु देशादौ निखिलेऽपि उपकरणजाते सति अस्यैव कस्मादुत्तमत्वमित्याशङ्क्य आह

**विमलीभूतहृदयो यत्तत्र प्रतिबिम्बयेत् ।।१११।।**
**साध्यं तदस्य दाढ्र्येन सफलत्वाय कल्पते ।**

तत्रेति विमलीभूते हृदये। तदिति साध्यम्।।१११।।

---

प्रश्न है कि, किसी कार्यविधि में देश और काल का बड़ा महत्त्व होता है। विभिन्न देश और काल की सामग्री के बल से विविध समीहित सिद्धियों का समुन्मेष होता है। यह बात भी शास्त्रों में सर्वत्र उल्लिखित है पर यहाँ वैमल्य पर ही बल प्रदान किया गया है। ऐसा क्यों? इस आशङ्का का उत्तर दे रहे हैं कि,

यद्यपि सिद्धियों की उपलब्धि में नियति प्राणवत्ता, सामग्री और भाववैमल्य ये चार कारण माने जाते हैं, फिर भी इनमें भाववैमल्य ही सर्वश्रेष्ठ होता है।।११०।।

शिष्य कहता है कि गुरुदेव! देश आदि में सारे उपकरण उपलब्ध रहते हैं फिर भी भाव वैमल्य की प्रधानता का क्या आधार है? इस शङ्का का समाधान कर रहे हैं—

विमल हृदय अर्थात् निर्मल मन वाला मनुष्य अपने मन में जिस लक्ष्य की कामना करता हुआ लक्ष्य को प्रतिबिम्बित करता है— वही लक्ष्य दृढता पूर्वक सफलता में प्रतफलित हो जाता है। अर्थात् समीहित दृढ़ इच्छाशक्ति से सफलता अनिवार्यतः सम्पन्न होती है।।१११।।

किमत्र प्रमाणमित्याशङ्क्य आह

**उक्तं श्रीसारशास्त्रे च निर्विकल्पो हि सिद्ध्यति ।।११२।।**
**क्लिश्यन्ते सविकल्पास्तु कल्पोक्तेऽपि कृते सति ।**

महाजनैरपि एतत् परिगृहीतमित्याह

**तदाक्रम्य बलं मन्त्रा अयमेवोदयः स्फुटः ।।११३।।**
**इत्यादिभिः स्पन्दवाक्यैरेतदेव निरूपितम् ।**

यदुक्तं तत्र

'तदाक्रम्य बलं मन्त्राः सर्वज्ञबलशालिनः ।
प्रवर्तन्तेऽधिकाराय करणानीव देहिनाम् ।।

---

आगम प्रामाण्य से इसका समर्थन कर रहे हैं—

श्री सार शास्त्र में यह लिखा गया है कि, निर्विकल्प अर्थात् मन के नैर्मल्य से स्वच्छचेता साधक साध्य की सिद्धि निश्चित रूप से कर लेता है। जितने सविकल्प पथ पर आरूढ रहते हैं, वही क्लेश का अनुभव करते हैं। भले ही वे कल्प पर्यन्त कल्पोक्त नियमों में लगे रहें, उन्हें सिद्धि नहीं प्राप्त होती है।।११२।।

महाजनों द्वारा प्रथमतः परिगृहीत यही पन्था है। यही कह रहे हैं—

जो साधक उस निर्विकल्प भूमि को अतिक्रान्त कर लेता है, वह बल का प्रतीक बन जाता है। उसके मन्त्रों में बलवत्ता अर्थात् ऊर्जा ओत प्रोत हो उठती है। यही साधक का सिद्धि के धरातल और साधना के क्षितिज पर स्फुट रूप से अर्थात् स्पष्ट रूप से उदय माना जाता है। इत्यादि स्पन्द शास्त्रोक्त इन वचनों द्वारा भी निरूपित किया गया है। स्पन्द शास्त्र की उक्ति का अर्थ इस प्रकार अवगम करना चाहिये—

उसको अतिक्रान्त कर ही बल की उपलब्धि सम्भव है। मन्त्रों में इससे प्राणवत्ता आती है। वे सर्वज्ञ बलशाली हो जाते हैं। साधकों के शरीर में मन्त्रों का प्रवर्त्तन उसी प्रकर होता है, जैसे इन्द्रिय वर्ग का अपने क्षेत्र में अधिकार पूर्ण प्रवर्त्तन होता है। पर एक बहुत बड़ी बात है। बीज अंकुरित होता है। शाखायें

तत्रैव संप्रलीयन्ते शान्तरूपा निरञ्जनाः ।
सहाराधकचित्तेन तेनैते शिवधर्मिणः ।।(२।२)

इति उपक्रम्य

अयमेवोदयस्तस्य ध्येयस्य ध्यायिचेतसि ।
तदात्मतासमापत्तिरिच्छतः साधकस्य या ।।
इयमेवामृतप्राप्तिरयमेवात्मनो ग्रहः ।
इयं निर्वाणदीक्षा च शिवसद्भावदायिनी ।।'
(२।६) इति।।११३।।

---

फूटती है। टहँनियाँ निकलती हैं। पत्तों में वही बीज वृक्ष बन कर खेलता है। उसमें फूल आ जाते हैं। मानो वृक्ष खिल उठा। मानो वृक्ष उन फूलों में फलों में विलीन हो गया। उसे जो होना था, हो गया। अब वह शान्त और निरञ्जन हो गया है। सर्वज्ञ ज्ञान में साधक भी प्रलीन हो जाता है, शान्त और निरञ्जन हो जाता है। मन्त्र बन जाता है। साधक और मन्त्र में कोई अन्तर नहीं रह जाता है। दोनों शिवधर्मिता से सम्पन्न थे। अब उनकी यह शैव महाभाव की यात्रा पूरी होती है। अब आराधक, उसका चित्त, उसके मन्त्र और मन्त्रों की ऊर्जा सब साधक शिव के साकार विग्रह में उल्लसित होकर विश्व को शैव ऊर्जा से विभूषित कर देते हैं।''

इतने उपक्रम मन्त्र, उसकी अतिक्रान्ति, मन्त्र से बल और उसकी परिणति की उक्ति के बाद पुनः २।६ में इसी विषय में कह रहे हैं कि,

यही उस परम स्पन्दात्मक शिव का उदय है। ध्येय की अवधारणा का उल्लास है। ध्याता की हृदय रूपी चैतन्य-मरीचियों से चमत्कृत वेदी पर चेतना का चिद्विलास है। तादात्म्य की समापत्ति का साक्षात्कार है। वृक्ष की अन्तिम चेतन परिणति और उसके फूलों का हास विलास है। वृक्ष ही मानो हास बन गया हो। उसी तरह साधक की चाह चरितार्थ हो गयी है। अब साधक शिव बन गया है। उसके अस्तित्व का फूल खिल गया है।

एतदेव उपसंहरति

**तस्मात्सिद्ध्यै विमुक्त्यै वा पूजाजपसमाधिषु ।।११४।।**
**तत्स्थानं यत्र विश्रान्तिसुन्दरं हृदयं भवेत् ।**

एवं स्थानकल्पनमभिधाय, सामान्यन्यासभेदमासूत्रयति

**यागौकः प्राप्य शुद्धात्मा बहिरेव व्यवस्थितः ।।११५।।**
**न्यासं सामान्यतः कुर्याद्बहिर्यागप्रसिद्धये ।**

---

यही अमृत प्राप्ति है। चिदैक्यदार्ढ्य का अमृत जिसने पी लिया, वही अमर है। अमरता हमारा अन्तिम लक्ष्य है। 'मृत्योर्मा अमृतं गमय' की चरम चामत्कारिकता का निश्च्योत है। अमृतद्रव से अभिषेक है। आत्मा यहाँ पकड़ में आ गया है। वह हमारी सत्ता में रूपायित होने के लिये विवश हो गया है। हम चलते हैं। तो वही चलता है। हमारी क्रिया में वही सक्रिय है। हमारा ज्ञान उसका प्रकाश बन कर जगत्वस्तु को दिखला देता है। वह हमारी पकड़ में है। वह 'अहम्' में उल्लसित हो गया है। यही निर्वाण दीक्षा है। यही दीक्षा शिव के सत् को भाव में (जगत् में) पिरो देती है। शैव सद्भाव की परम व्याप्ति में साधक का जीवन समा जाता है। पेड़ फूल की खुशी में समा जाता है। उसकी निर्वाण दीक्षा पूरी हो गयी है'' ।।११३।।

इतना कहने के बाद अब इस विषय का उपसंहार कर रहे हैं। श्लोक के माध्यम से कह रहे हैं कि,

इसलिये चाहे सिद्धि का उद्देश्य हो, विमुक्ति का लक्ष्य हो, दोनों बुभुक्षा या मुमुक्षा की दशाओं में पूजा प्रक्रिया, जप और समाधि के लिये वही स्थान ग्राह्य और चयनीय होता है, जो विश्रान्ति प्रद हो और सुन्दर हो। हृदय ही हो। मन वहाँ आत्यन्तिकरूप से रम जाय। मानो स्थान ही रम्यता के रूप में परिणत हो जाय।।११४।।

स्थान कल्पन का यह प्रकरण इस प्रकार पूरा कर लेने पर अब नये विषय न्यास भेद का आसूत्रण कर रहे हैं—

तदेव आह

**मातृकां मालिनीं वाथ द्वितयं वा क्रमाक्रमात् ।।११६।।**
**सृष्ट्यप्ययद्वयैः कुर्यादेकैकं संघशो द्विशः ।**

क्रमाक्रमादिति आदौ मातृका, ततो मालिनी, तद्विपर्ययो वा। अप्यः संहारः। एकैकमिति सृष्ट्याद्यन्यतमरूपतया। संघश इति सृष्ट्यादित्रैरूप्येण। द्विशो मातृकामालिनीगतत्वेन।।११५-११६।।

एतदेव विभजति

**ललाटवक्त्रे दृक्कर्णनासागण्डरदौष्ठगे ।।११७।।**
**द्वये द्वये शिखाजिह्वे विसर्गान्तास्तु षोडश ।**

---

शुद्धात्मा शिष्य यागगृह प्राप्त कर लेने पर बाहर ही अवस्थित होकर बहिर्याग की विशेष सिद्धि के उद्देश्य की पूर्ति के लिये सामान्यतः सर्वप्रथम विहित न्यास की विधि पूरी करे।।११५।।

न्यास विधि के सम्बन्ध में आवश्यक और प्रारम्भिक निर्देश दे रहे हैं—

सर्वप्रथम मातृकान्यास करे अथवा पहले मालिनी न्यास ही करे। दोनों में से किसी का पहले करने का विधान है। क्रम और अक्रम का यहाँ ध्यान नहीं दिया जाता। दोनों में से किसी को पहले अपना ले। इसमें कोई विधि निषेध नहीं है।

चाहे सृष्टि क्रम या संहार क्रम का विधान हो दोनों को चाहे तो एक साथ मिलाकर, या तीनों सृष्टि, स्थिति और संहार को मिलाकर, एक एक से या संघ अर्थात् समूह में न्यास करें, किसी प्रकार का यहाँ विरोध नहीं। हाँ न्यास करना आवश्यक है।।११६।।

न्यास को ही यहाँ विभजित कर रहे हैं—

ललाट, मुख में एक एक से इसके बाद आँखें, कान, नासिका, दाँत, ओठ दोनों दोनों में दो दो अक्षर से तथा शिखा और जीभ में एक एक अक्षर से न्यास करे। इस प्रकार सोलह स्वरों का षोडशधा न्यास करना चाहिये।

**दक्षान्ययोः स्कन्धबाहुकराङ्गुलिनखे कचौ ।।११८।।**
**वर्गौ टतौ क्रमात्कट्यामूर्वादिषु नियोजयेत् ।**
**पवर्गं पार्श्वयोः पृष्ठे जठरे हृद्यथो नव ।।११९।।**
**त्वग्रक्तमांससूत्रास्थिवसाशुक्रपुरोगमान् ।**
**इत्येष मातृकान्यासो मालिन्यास्तु निरूप्यते ।।१२०।।**

द्वये द्वये इति दृगादौ दक्षवामरूपेण। रदादौ तु अधऊर्ध्वक्रमेण। क्रमादिति दक्षवामजङ्घारूपात्। ऊर्वादीति आदिशब्दात्पादाङ्गुलिनखग्रहणम्। पार्श्वयोरिति दक्षवामयोः। सूत्राणि स्नायवः। तदुक्तम्

---

१. मातृका न्यास— दाहिने और बायें कन्धे, बाहु कराङ्गुलियाँ और नख में क्रमशः कवर्ग और चवर्ग का न्यास करना चाहिये। ट वर्ग और त वर्ग का भी उसी दक्षिण वाम भाग की दृष्टि से नितम्ब, ऊरु, जानु, जङ्घा और पादाङ्गुलि में न्यास करना चाहिये। प वर्ग का न्यास दोनों पार्श्व भाग पीठ, जठर हृदय में करना चाहिये। इसी तरह य वर्ग का न्यास भी त्वक्, रक्त, मांस और सूत्र (नाड़ियों) में करना चाहिये। श वर्ग का न्यास अस्थि, वसा, शुक्र, पुरोगम (प्राणकोष) में करना उचित है। इसके बाद मालिनी न्यास की बात करेंगे।

**१. स्वरन्यास**—अन्यत्र आगम में इसे इस प्रकार स्पष्ट से प्रदर्शित किया गया है—

| क्रम | अंग | वर्ण | क्रम. | अंग | वर्ण |
|---|---|---|---|---|---|
| १. | ललाट | अ | ६. | कपोल पाली | लृ लॄ |
| २. | मुख | आ | ७. | ऊपर नीचे दंत | ए ऐ |
| ३. | दोनों नेत्र | इ ई | ८. | ऊपर नीचे ओठ | ओ औ |
| ४. | दोनो कान | उ ऊ | ९. | शिखा | अं |
| ५. | नासापुट | ऋ ॠ | १०. | जीभ | अः |

'अ ललाटे द्वितीयं च वक्त्रे संपरिकल्पयेत् ।
इ ई नेत्रद्वये दत्त्वा उ ऊ कर्णद्वये न्यसेत् ।।
ऋ ॠ नासापुटे तद्वत् ऌ ॡ गण्डद्वये न्यसेत् ।
ए ऐ अधोर्ध्वदन्तेषु ओ औकारौ तथोष्ठयोः।।
अं शिखायां विसर्गेण जिह्वां संपरिकल्पयेत् ।
दक्षिणस्कन्धदोर्दण्डकराङ्गुलिनखेषु च ।।

---

यहाँ वर्णन्यास का क्रम प्रदर्शित किया जा रहा है—

| क्रम | वर्ग | अंग | वर्ण |
|---|---|---|---|
| १. | कवर्ग | दाहिना कंधा | क |
| | | दाहिना बाहु हस्त | ख, ग |
| | | दाहिनी अंगुलियां | घ |
| | | दाहिने नख | ङ |
| २. | चवर्ग | वाम स्कन्ध | च |
| | | वाम बाहु हस्त | ज |
| | | वाम अंगुलियाँ | झ |
| | | वाम नख | ञ |
| ३. | टवर्ग | दक्ष नितम्ब | ट |
| | | ,, ऊरु | ठ |
| | | ,, जानु | ड |
| | | ,, जंघा | ढ |
| | | ,, पादपृष्ठ | ण |
| ४. | तवर्ग | वाम नितम्ब | त |
| | | ,, ऊरु | थ |
| | | ,, जानु | द |
| | | ,, जंघा | ध |
| | | ,, प्रपद | न |

कवर्गं विन्यसेद्वामे तद्वच्चाद्यमनुक्रमात् ।
टताद्यौ पूर्ववद्वर्गौ नितम्बोर्वादिषु न्यसेत् ।।
पाद्यं पार्श्वद्वये पृष्ठे जठरे हृद्यनुक्रमात् ।
त्वग्रक्तमांससूत्रेषु यवर्गं परिकल्पयेत् ।।
शाद्यमस्थिवसाशुक्रप्राणकोशेषु पञ्चकम् ।' इति।

---

| | | | |
|---|---|---|---|
| ५. | पवर्ग | दक्षपार्श्व | प |
| | | वाम पार्श्व | फ |
| | | पृष्ठ | ब |
| | | जठर | भ |
| | | हृदय | म |
| ६. | यवर्ग | त्वक् | य |
| | | रक्त | र |
| | | मांस | ल |
| | | स्नायु | व |
| ७. | शवर्ग | अस्थि | श |
| | | वसा | ष |
| | | शुक्र | स |
| | | प्राण | ह |
| | | कोश | क्ष |
| ८. | चक्रेश्वर | व्यञ्जनवर्ग | क्ष |
| | | स्वर वर्ग | |
| | | १ + ८ = ९ पद न्यास | |

एतद्वाच्याश्च पञ्चाशद्रुदा एकीकाराह्निके वक्ष्यन्ते इति तत एव अवधार्याः।।
मालिनीन्यासमेव निरूपयति

**न शिखा ऋॠऌॡचशिरोमालाथमस्तकम्।**
**नेत्राणि चोर्ध्वे धोऽन्ये ई घ्राणं मुद्रे णु णू श्रुती।।१२१।।**

**बकवर्गइआ वक्त्रदन्तजिह्वागिरि क्रमात्।**
**वभयाः कण्ठदक्षादिस्कन्धयोर्भुजयोर्डढौ ।।१२२।।**

---

इसप्रकार से स्वर वर्ग के साथ स्पर्श, ऊष्मा और अन्तस्थ तीन भेदों के सात वर्गों को मिलाकर आठ वर्ग होते हैं। देह के अङ्गों में मातृका के ५० अक्षर न्यस्त किये जाते हैं। अब यहाँ से शरीर के अङ्गों में मालिनी का किस प्रकार न्यास किया जाता है। इसका सन्दर्भ पूर्वक वर्णन किया जायेगा।।११७-१२०।।

मालिनी न्यास का क्रम ही निरूपित कर रहे हैं। मालिनी में भी उतने ही अक्षर होते हैं। केवल क्रम का अन्तर है। यह क्रम भी वर्णविज्ञान का चामत्कारिक आविष्कार है—

| क्रम | वर्ण | अङ्ग |
|---|---|---|
| १. | न | शिखा |
| २. | ऋ, ॠ, ऌ ॡ | शिरोमाला |
| ३. | य | मस्तक (शिर का ऊर्ध्व भाग) |
| ४. | च, ध | ललाटस्थ नेत्र (च) दक्ष वाम (ध) |
| ५. | ई | नासिका |
| ६. | ण उ, ऊ | श्रुति (ण कर्ण) उ ऊ (कर्णआकार) |
| ७. | ब | वक्त्र |
| ८. | कवर्ग | दन्त |
| ९. | इ | जीभ |
| १०. | अ | वाक् |

**ठो हस्तयोर्झञौ शाखा ज्रटौ शूलकपालके ।**
**प हृच्छलौ स्तनौ क्षीरमा स जीवो विसर्गयुक्।।१२३।।**

**प्राणो हवर्णः कथितः षक्षावुदरनाभिगौ ।**
**मशान्ता कटिगुह्योरुयुग्मगा जानुनी तथा ।।१२४।।**

**एऐकारौ तत्परौ तु जङ्घे चरणगौ दफौ ।**

शिरोमाला कपालारम्भिका। मस्तकमिति तन्मध्यम्। ऊर्ध्वे इति ललाटे। अन्ये इति दक्षवामे। णु णू श्रुती मुद्रे इति आर्थः क्रमः, तेन णकारः कर्णौ, तद्भूषणमुकार ऊकारश्च। यच्छ्रीसिद्धातन्त्रं

---

| | | |
|---|---|---|
| ११. | व, भ, य | कण्ठ (व) स्कन्ध (दक्ष (भ) वाम य)) |
| १२. | ङ | दक्षबाहु |
| १३. | ढ | वाम बाहु |
| १४. | ठ | दोनों हाथ |
| १५. | झ, ञ | दक्ष वाम अंगुलियाँ |
| १६. | ज र ट | शूलशिखा (ज) शूलदण्ड (र), कपाल (ट) |
| १७. | प | हृदय |
| १८. | छ ल | दक्षवाम स्तन |
| १९. | आ | स्तनान्तर्गत क्षीर |
| २०. | स,: विसर्ग ह | आत्मा (स) प्राण (:) मुख्य प्राण (ह) |
| २१. | ष, क्ष, अं | उदर, नाभि, शुक्र |
| २२. | म, श त | कटि, गुह्य और दोनों ऊरु |
| २३. | ए ऐ | दक्ष वाम जानु |
| २४. | ओ औ | दक्ष वाम जंघा |
| २५. | द फ | दक्ष वाम चरण |

**'झसप्तमौ स्थितौ कर्णौ तयोर्मुद्रे तु ईपरौ।' इति।**

आ इति अकारस्य बहुवचने रूपम्। आदिना वामः स्कन्धः, तेन दक्षिणे स्कन्धे भ, वामे य। भुजयोर्दक्षवामयोः। शाखा दक्षवामकराङ्गुलयः। त्रेति दण्डेन सह शूलम्, तेन शूलस्य दण्डे रेफः, शिखासु जकारः, स च उत्तानो येन साक्षात् शूलत्वं स्यात्। यच्छ्रीसिद्धातन्त्रे

**'दक्षिणे च करे ज्ञेयं शूलं दण्डे पसप्तमः ।**
**उत्तानस्तु प्रदातव्यः खकारस्य तु सप्तमः ।।**
**साक्षाच्छूलं भवेदेवं युक्तं शृङ्गैस्त्रिभिः प्रिये।'** इति।

जीव इति आत्मा सामान्यप्राणात्मा च। तयोश्च अभेदादेकतया निर्देशः, तेन साक्षादात्मनि सकारः, प्राणात्मनि तु विसर्गः। प्राण इति विशिष्टः। इति

---

इस प्रकार से मालिनी के भी उक्त (पचास) वर्णों का विन्यास शरीर के निर्दिष्ट अङ्गों पर किया जाता है। कुछ स्थलों पर विशेष ध्यान देने से अर्थ संगति होती है। जैसे—

१. श्लोक १२१ में नेत्राणि और 'धो' के बीच में चोर्ध्वे आया है। इससे ऊर्ध्व तीसरा नेत्र 'च' और दक्षवाम 'ध' होते हैं। इसी श्लोक में मुद्रे आया है। इस सम्बन्ध में श्री सिद्धा तन्त्र का उद्धरण दिया गया है। "झ से सातवाँ वर्ण अर्थात् 'ण' दोनों कानों पर न्यस्त होता है। दोनों कानों की मुद्रायें ई के पर भाग में आने वाले वर्ण अर्थात उ और ऊ हैं।" कानों की मुद्राओं का अर्थ उनके आभूषण या आकार ही हो सकते हैं।

२. पसप्तम र कार होता है। ख कार का सातवाँ अक्षर 'ज' है।

३. जीव (श्लोक १२३) शब्द आत्मा, सामान्य प्रणात्मा अर्थ में प्रयुक्त है। विशेष प्राण का पृथक् निर्देश है। इन तीनों में स, विसर्ग और ह का न्यास किया जाता है।

श्री त्रिशिरो भैरव शास्त्र में नादिनी से लेकर फेत्कारिणी नामक ५० शक्तियों का पृथक पृथक् नाम निर्देश है। वहीं का ग्रन्थ उद्धृत कर रहे हैं।

मकारशकारानुसारतकारा:। जान्वादि दक्षादिक्रमेण। तत्परौ ओऔकारौ। एतद्वाच्याश्च पञ्चाशत् नादिन्यादिफेत्कारिकान्ता: शक्तयस्तत्र तत्र उक्ता:। तथाच श्रीत्रिशिरोभैरव:

**'नादिनी तु शिखाग्रस्था नकाराक्षरसंज्ञिता।**
**ऋ ॠ ऌ ॡ निवृत्त्याद्या मालिका शिरसि स्थिता।।**
**थ शिरोग्रं सती देवी ध नेत्रे प्रियदर्शना।**
**ई गुह्यशक्तिर्नासास्था व्याप्तास्ते नेत्रमध्यत:।।**
**व्यापयित्वा स्थिता देवी च तृतीयं च लोचनम्।**
**चामुण्डा परमेशानी ललाटस्था विराजते।।**
**बकारो वदनं तस्या वज्रिणी शक्तिरव्यया।**
**कवर्गो दशनास्तीक्ष्णा: कङ्कटा कालिका शिवा।।**

---

इस उद्धृत अंश का अर्थ इस विवरण से स्पष्ट हो जायेगा—

| क्रम | वर्ण | वर्ण शक्ति के नाम | न्यासाङ्ग |
|---|---|---|---|
| १. | न | नादिनी | शिखाग्र |
| २. | ऋ ॠ ऌ ॡ | निवृत्ति, प्रतिष्ठा, विद्या, शान्ता | शिरो माला |
| ३. | थ | सती (उमा) | मूर्ध्नि शिरोग्र |
| ४. | ध | प्रियदर्शिनी | नेत्र (दक्षवाम) |
| ५. | ई | गुह्यशक्ति | (ये दोनों शक्तियाँ) नासिका नेत्र मध्य में व्याप्त हैं। |
| ६. | च | चामुण्डा परमेशानी | ललाटस्थ तृतीय नेत्र |
| ७. | ब | अव्यय वज्रिणी शक्ति | वदन |
| ८. | क ख ग घ ङ | कङ्कटा, कालिका, शिवा घोरघोष शिविरा | दन्त पंक्ति |

घोरघोषा शिविराख्या कवर्गे संप्रकीर्तिताः ।
मायादेवी जिह्वा तु अ वाग्वागीश्वरी मता ।।
नारायणी ण कर्णौ तु तयोरु ऊ च भूषणम् ।
मोहनी च तथा प्रज्ञा व कण्ठशिखिवाहनी ।।
लामा विनायिकी देवी डढौ बाहुद्वयं विभोः ।
पूर्णिमा हस्तदेशस्था ठकाराख्या विभोर्मता ।।
झङ्कारी कुन्दना चैव झ-ञावङ्गुलयः क्रमात् ।
कापालिनी वामकरे टकारः परमेश्वरी ।।
दीपनी शूलदण्डश्च रेफः सम्यगुदाहृतः ।
ज जयन्ती भवेच्छूलं देवदेव्या महेश्वरि ।।

---

| | | | |
|---|---|---|---|
| ९. | इ | माया देवी | जिह्वा |
| १०. | अ | वागीश्वरी | वाक् |
| ११. | ण | नारायणी | दोनों कान |
| १२. | उ ऊ | मोहिनी, प्रज्ञा | कर्णभूषण |
| १३. | व | शिखिवाहिनी | कण्ठ |
| १४. | ड ढ | लामा विनायिकी | दोनों बाहु |
| १५. | ठ | पूर्णिमा | हस्त |
| १६. | झ | झङ्कारी, कुन्दना, | दक्षअंगुलियाँ |
| | ञ | कापालिनी | वाम अंगुलियाँ |
| १७. | ट | परमेश्वरी | कपाल |
| १८. | र | दीपनी | शूलदण्ड |
| १९. | ज | जयन्ती | शूलाग्र |
| २०. | भ य | भीषणी वायुवेगा | दक्ष वाम स्कन्ध |
| २१. | प | पावनी | हृदय में लग्न |

भीषणी वायुवेगा च स्कन्धयोरुभयोर्भ–यौ ।
पावनी तु प हृल्लग्ना उदरं षश्च लम्बिका ।।
संहारिका क्षकारोऽयं नाभौ देवस्तु भैरवि ।
छगली पूतना चेति स्तनौ छ– लौ प्रकीर्तितौ ।।
आ मोटरी तद्गतं तु क्षीरमा परिकीर्तितम् ।
परमात्मा सकारोऽयं ह प्राणः शक्तिरम्बिका ।।
इच्छाशक्तिर्विसर्गाख्या व्याप्य प्राणात्मनि स्थिता ।
म नितम्बं महाकाली श गुह्यं कुसुमायुधा ।।
शुक्रा देवी भवेच्छुक्रमनुस्वारस्तु भैरवी ।
तारा तकार ऊरुस्था ए ऐ ज्ञानाक्रिये उभे ।।

---

| | | | |
|---|---|---|---|
| २२. | ष | लम्बिका | उदर |
| २३. | क्ष | संहारिका | नाभि |
| २४. | छ | छगली | दक्ष स्तन |
| २५. | ल | पूतना | वाम स्तन |
| २६. | आ | मोटरी | स्तनगत क्षीर |
| २७. | स | परमात्मा | जीव |
| २८. | ह | अम्बिका शक्ति | प्राण |
| २९. | : (विसर्ग) | इच्छा शक्ति | पञ्चप्राण |
| ३०. | म | महाकाली | नितम्ब |
| ३१. | श | कुसुमायुधा | गुह्य |
| ३२. | (अनुस्वार) | भैरवी शुक्रा | शुक्र |
| ३३. | त | तारा | दक्षवाम ऊरु |
| ३४. | ए ऐ | ज्ञान क्रिया | दक्षवाम जानु |
| ३५. | ओ औ | गायत्री सावित्री | दक्षवाम जंघा |
| ३६. | द फ | दहनी फेत्कारिका | दक्षवाम प्रपद |

**जानुनी संस्थिते देवी भैरव्यास्तु महात्मनः ।**
**गायत्री चैव सावित्री ओ औ जङ्घे प्रकीर्तिते ।।**
**दहनी दक्षपादस्था वामे फेत्कारिका द–फौ ।'** इति।

एतच्च श्रीमतभट्टारकादावपि सृष्टिसंहारभङ्ग्या उभयथा विभज्य उक्तमिति स्वयमेव ततोऽपि अवधार्यम्, ग्रन्थविस्तरभयात्तु प्रातिपद्येन न संवादितम्।

तस्या एव उपसंहारगर्भं स्वरूपमाचष्टे

**इत्येषा मालिनी देवी शक्तिमत्क्षोभिता यतः ।१२५।।**
**कृत्यावेशात्ततः शाक्ती तनुः सा परमार्थतः ।**इति।।

एवमुक्ता एषा भगवती यतः शक्तिमता

**'बीजमत्र शिवः..........................।'**(मा. वि. ३।१२)

इत्युक्त्या वाच्यवाचकयोरभेदादवर्गेण क्षोभिता विसंष्ठुलतां स्वसांमुख्यं च आपादिता, ततः कृतिक्रियाकर्मण्यावेशात् सा परमार्थतः शाक्ती तनुर्बहिरुल्लिल-सिषायोगादुन्मग्ननिजस्वरूपेत्यर्थः।।१२५।।

---

श्रीमत् भट्टारक शास्त्र में भी सृष्टि और संहार क्रम की दृष्टि के अनुसार दो प्रकार से विभक्त कर इस विषय का वर्णन किया गया है। स्वतः स्वाध्याय के आधार पर इनका निर्धारण करना चाहिये।।१२१-१२४।।

इतना विशद वर्णन करने के बाद मालिनी के वैशिष्ट्य पर प्रकाश डालने के साथ ही सिद्धि विषयक उसकी उपयोगिता के वर्णन का उपक्रम कर रहे हैं—

इस प्रकार ऊपर के विश्लेषण के आधार पर मालिनी देवी की दिव्यता का एक वाङ्मयमनोज्ञ रूप सामने प्रत्यक्ष सा हो रहा है। ऐसी ही यह मालिनी देवी है। शक्तिमान् के द्वारा ही यह सम्पन्न क्षोभात्मक साक्ष्य का ही वैलक्षण्य है, जो पञ्चाशत् अक्षर समाम्नाय में स्वयं प्रत्यक्ष हो रहा है।

कृति के आवेश से यह शाक्ती हो जाती है। शाक्त शरीर इसका पारमार्थिक शरीर है। मालिनी विजयोत्तरतन्त्र ३।१२ में यह स्पष्ट उल्लेख है कि,

"शिव ही यहाँ बीज (हैं).................।"

अत एव अस्याः सिसृक्षाभिमुख्यात् निखिलसिद्ध्यादिवितरणे परं सामर्थ्यमित्याह

**अन्योन्यं बीजयोनीनां क्षोभाद्वैसर्गिकोदयात् ।।१२६।।**
**कां कां सिद्धिं न वितरेत्किं वा न्यूनं न पूरयेत् ।**

तदुक्तम्

**'अथान्यत्संप्रवक्ष्यामि मालिन्याः कर्म चोत्तमम् ।**
**वश्यविद्वेषणोच्चाटस्तोत्रस्तम्भनमारणम् ।।**
**ध्यानमात्राद्भवेद्देवि युञ्जतो यस्य सुव्रते ।'** इति,

---

उक्त कथन से यह सिद्ध होता है कि, वाच्य और वाचक इनका परस्पर अभेद सम्बन्ध है। इस दृष्टि से यह स्पष्ट है कि, यह 'अ वर्ग' से क्षोभिता होकर विसंष्ठुलता (विक्षुब्धता) को प्राप्त कर स्वात्मसांमुख्य की स्थिति में कृति, क्रिया और कर्मभाव के आवेश से आविष्ट होती है। परिणामतः पारमार्थिक शाक्त शरीर में अन्तर से बाह्य भाव में अभिव्यक्त होती है। यह एक प्रकार की उल्लिलसिषा (उल्लसित होने की समीहा) है, जिससे प्रभावित होकर यह स्वात्मस्वरूप को अक्षरों में प्रत्यक्ष कर देती है।।१२५।।

इसीलिये सर्जन की आकांक्षा के आभिमुख्य में समर्थ यह मालिनी देवी समस्त सिद्धियों को सिद्ध कर देने में सर्वथा समर्थ मानी जाती है। यही कह रहे हैं-—

बीज और योनि के एक दूसरे के प्रति क्षोभ से और परिणामस्वरूप वैसर्गिक समुल्लास के सामर्थ्य से मालिनी शक्ति कौन सी सिद्धि नहीं दे सकती, इस प्रश्न के लिये अवकाश नहीं रहता। अर्थात् निखिल सिद्धियों को प्रदान कर भक्तों को अनुगृहीत करती है। साथ ही इस प्रश्न के लिये भी अवकाश नहीं कि, यह किस किस कमी की पूर्ति नहीं करती? अर्थात् समस्त अभावों को भाव सम्भार से भर देती है। कहा गया है कि,

तथा

**प्रायश्चित्तेषु सर्वेषु जपेन्मालामखण्डिताम्।**
**भिन्नां वाप्यथवाभिन्नां व्यतिक्रमबलाबलात्।।**
**सकृज्जपात्समारभ्य यावल्लक्षत्रयं प्रिये।'**
(मा. वि. १३।१८) इति।।

ननु बीजयोनीनामनेकप्रकारः शास्त्रेषु क्षोभ उक्तः, तत कथमस्या एव एवं सामर्थ्यमित्युच्यते इत्याशङ्क्य आह

**योनिबीजार्णसांकर्य बहुधा यद्यपि स्थितम् ।।१२७।।**
**तथापि नादिफान्तोऽयं क्रमो मुख्यः प्रकीर्तितः ।**

---

"हे सुव्रते! प्रश्न उससे अपने को समायोजित करने का है। जो उससे अपने को जोड़ लेता है, मैं तुम्हें अब वही बतलाने जा रहा हूँ कि, इसका कितना उत्तम फल साधक को प्राप्त हो जाता है। उसकी कृपा से पुरुष वश्य, विद्वेष, उच्चाटन, प्रशस्ति, स्तम्भन और मारण रूप षटकर्म-सिद्ध हो जाता हैं"।

इसके अतिरिक्त मालिनी विजयोत्तर तन्त्र १३।१८ में भी मालिनी मन्त्र की महत्ता तथा इसकी जपसंख्या आदि का भी निर्देश किया गया है—

"भगवान् शङ्कर कहते हैं कि, हे प्रिये! समस्त प्रकार के प्रायश्चित्तों में अखण्डित रूप से मालिनी माला का जप करना चाहिये। मालिनी को अलग अलग वर्णों में भिन्न कर या अभिन्न रूप से अथवा व्यतिक्रम के बलाबल का विचार करते हुए एक बार जप शुरू करे तो इसे तीन लाख पूरा करना चाहिये."।।१२६।।

प्रश्नकर्त्ता पूछता है कि बीज और योनि की ऐसी स्थिति में इस मालिनी क्रम का ही इतना सामर्थ्य क्यों व्यक्त किया गया है? इसका उत्तर दे रहे हैं—

योनि और बीजवर्णों का सांकर्य यद्यपि शास्त्रों में अनेक प्रकर से वर्णन का विषय बनाया गया है फिर भी न से लेकर फ तक का यह वर्णक्रम ही, सबसे मुख्य माना जाता है। उसका कारण यह है कि 'फ' वर्ण का समुच्चार करते

मुख्यत्वमेव दर्शयति

**फकारादिसमुच्चारान्नकारान्तेऽध्वमण्डलम् ।।१२८।।**
**संहृत्य संविद्या पूर्णा सा शब्दैर्वर्ण्यते कथम्।**

**अतः शास्त्रेषु बहुधा कुलपुत्तलिकादिभिः ।।१२९।।**
**भेदैर्गीता हि मुख्येयं नादिफान्तेति मालिनी ।**

इह खलु परा परमेश्वरी संवित् प्रथमं प्रतियोग्यभावमवभासयन्ती परनादैकवृत्तितामश्नुवाना विश्वमवबिभासयिषुः संजीवनीबीजचतुष्टयासूत्रणद्वारेण

---

हुए 'न' वर्ण तक के इस क्रम में पूरे अध्वमण्डल को संहृत कर यह सर्वश्रेष्ठ मालिनी विद्या उल्लसित है। यही पूर्णा विद्या है। पूरी तरह परिपूर्ण है। शब्दों से इसे कहना और व्यक्त करना असम्भव है। इसी लिये अन्य शास्त्रों में बहुधा विविध भेद भिन्न कुल पुत्तलिकाओं द्वारा यह विविध भाँति से गायी जाती है। अतः यह नादि फान्ता मालिनी विद्या ही मुख्य मानी जाती है।

मालिनी विद्या परा परमेश्वरी संवित् शक्ति पहले स्वयम् उल्लसित रहती है। उसका कोई प्रतियोगी नहीं रहता। उस समय के संवित्-स्पन्द परामर्श में सूक्ष्म रूप से निनदित नाद मात्र की वृत्ति में ही व्याप्त रहती है। विश्व को विभासित करने की उसमें इच्छा उत्पन्न होती है। इसे अवबिभासयिषा कहते हैं। इस इच्छा से प्रेरित हो कर संवित्ति देवी सबसे पहले चार बीज वर्णों का आसूत्रण करती है। इन बीजवर्ण चतुष्टय को 'संजीवनीबीज' कहते हैं।

इस बीजवर्ण चतुष्टय रूप संजीवनी बीज मन्त्र से यह विश्व की सारी भाव राशि को सम्यक् से जीवनी शक्ति का वरदान देती है। भावराशि संजीवन प्रदान करती हुई भी परामर्श-रहस्यमयी यह देवी स्वयं नाद में विश्रान्त रहती है।

फिर उद्वेष्टन क्रम के अनुसार स्थूल अन्तिम नाद प्रथा का प्रथन करती है। राव (रणन) योग्य वर्णों के उच्चार के क्रम में उस विन्दु पर पहुँचती है, जहाँ उच्चार के निषेध का परामर्श होता है। यह ध्यान देने की बात है कि, जहाँ भी निषेध का परामर्श होता होगा, वहाँ शून्य होता है।

सकलमेव भावजातं संजीवयन्त्यपि परामर्शसारतया नादे एव विश्रान्तिमाश्रयन्ती पुनरुद्वेष्टनभङ्ग्या स्थूलान्त्यनादप्रथनपुरःसरं राववर्णोच्चारक्रमेण निषेधपरामर्शैकरूपे शून्यात्मनि निखिलमिदमध्वमण्डलमुपसंहरन्ती स्वात्ममात्रविश्रान्तेः परानपेक्षतया पूर्णतामवलम्बमाना सदसदादिपदव्यपदेशपात्रतामसहमाना विकल्पयितुं न शक्यते इति इयं शास्त्रान्तरेषु कुलपुत्तलिकादिभिर्भेदैर्बहुधा गीतापि नादिफान्तस्वरूपा मालिनी मुख्या तत्तदनेकप्रकारबीजयोन्यात्मकक्षोभान्तरविलक्षणेत्यर्थः।।१२९।।

ननु भवतु नाम एवं, मातृकामालिन्योः पुनरेवंशब्दप्रवृत्तौ किं निमित्त मित्याशङ्क्य आह

**शब्दराशेर्भैरवस्य यानुच्छूनतयान्तरी ।।१३०।।**

---

उस समय एक प्रकार से सारे व्यक्ताव्यक्त अध्वमण्डल का उपसंहार सा हो जाता है। संविद् देवी वहाँ स्वात्मविमर्श राशि में विश्राम करती है। वहाँ उसे दूसरे किसी की अपेक्षा नहीं होती। स्वयं स्वात्मपूर्णत्व में उल्लसित हो जाती है। उस समय न उसे सत् कह सकते हैं न असत्। इस प्रकार कोई व्यपदेश उसे संकेतित करने में असमर्थ होता है। विकल्प शून्य निर्विकल्प भाव का वहाँ अवलम्बन करती है। ऐसे विशेषणों से विशिष्ट मूल दिव्यशक्ति का गान अनेक शास्त्र करते हैं।

कुलपुत्तलिकाओं के अनेकानेक भेदों के कारण यह विविध शास्त्रों में विविध रूप से परिगीत होती हुई भी विशेष कर नादि फान्त वर्णों में व्यक्त होकर मालिनी संज्ञा से विभूषित होती है। यह मालिनी विद्या ही मुख्य विद्या है। यही अनेक प्रकार की बीजयोनिसंयोगजन्य संक्षोभात्मकता के चमत्कार से अत्यन्त विलक्षण वैलक्षण्य से लक्षित होती हुई उल्लसित होती है।।१२७-१२९।।

पहले मातृका शक्ति का वर्णन आ चुका है। यहाँ मालिनी विद्या का सन्दर्भ भी आया। दोनों में पञ्चाशत् वर्ण राशि का ही हेर फेर है। फिर एक को मातृका और दूसरे वर्णक्रम को मालिनी कहने का क्या कारण है? इसका उत्तर दे रहे हैं—

**सा मातेव भविष्यत्त्वात्तेनासौ मातृकोदिता ।**
**मालिनी मालिता रुद्रैर्धारिका सिद्धिमोक्षयोः।।१३१।।**
**फलेषु पुष्पिता पूज्या संहारध्वनिषट्पदी ।**
**संहारदानादानादिशक्तियुक्ता यतो रलौ ।।१३२।।**
**एकत्वेन स्मरन्तीति शंभुनाथो निरूचिवान् ।**

या नाम पूर्णप्रकाशात्मनः शब्दराशेर्भगवतो बहिरौन्मुख्याभावादान्तरी प्रमात्रैकात्म्यमापन्ना शक्तिः, सा तत्तद्भेदप्रथात्मनोऽनुच्छूनतया भविष्यत्त्वात् मातृतुल्येत्यसौ इवार्थे कनोविधानात् मातृका उदिता तच्छब्दव्यपदेश्येत्यर्थः। माल्यते धार्यते रुद्रैरात्मतया स्वीक्रियते, मलते भुक्तिमुक्तिस्वरूपे धत्ते इति कर्मणि

---

शब्द राशि भैरवरूप परमेश्वर का साक्षात् शरीर है। प्रत्यक्ष विग्रह है। उसकी उच्छून अभिव्यक्ति का प्रतीक है। इसके विपरीत उसकी अनुच्छून अर्थात् अत्यन्त सूक्ष्म आन्तरिक शक्ति का भी एक स्वरूप होता है। यह माता की तरह वात्सल्य-मयी शक्ति होती है। इसके उल्लास का भविष्य इसके वात्सल्य पर ही निर्भर है। अतः इस आन्तरी शक्ति को मातृका कहते हैं।

मालिनी शक्ति रुद्रों द्वारा मालित होती है। सिद्धि और मोक्ष दोनों को धारण करती है। समस्त शुभ फलवत्ता का आधान करती है। फल प्रदान करने मात्र से खिल उठती है, पुष्पित होती है। अत्यन्त पूज्य है। यह नादान्त अनुरणन करने वाली अलिनी है। यह संहार शक्ति के दान और अदान दोनों में दक्ष है। क्योंकि 'र' और 'ल' को एकत्व के फलक पर यही उल्लसित करती है। 'रा' दाने (अ.६०) और ला आदाने (अ.६१) इन दोनों धातुओं से निष्पन्न 'र' और 'ल' को तादात्म्य भाव से धारण करती है, मेरे परमगुरुदेव स्वयं शम्भुनाथ ने मुझे यह उपदेश देकर अनुगृहीत किया है। पूर्ण प्रकाशात्मक शब्द राशिरूप भगवान् भैरव के बाह्य औन्मुख्य के अभाव में प्रमातृतादात्म्य भाव से अवस्थित आन्तरी शक्ति ही शाश्वत विमर्शरूप में उल्लसित रहती है। उस समय विभिन्न विभिन्न अनन्त भेदों की प्रथा शान्त बनी रहती है। सारे भविष्यत् उत्कर्ष उसमें छिपे रहते हैं। माँ जैसे अपने पुत्र के लिये सब कुछ निछावर करने को तैयार

कर्त्तरि च 'मल मल्ल धारणे' इत्यस्य, तत्तद्वश्यादिफलनिमित्तं संजातमाला, मालाशब्दस्य पुष्पमालायां रूढस्य अवयवे समुदायोपचारेण पुष्पवाचित्वा-त्पुष्पिणीत्यर्थः। अनयैव व्युत्पत्त्या पूजोपकरणभूता माला विद्यते यस्याः, सा पूज्येति माशब्दध्वननीयस्य संहारस्य अलिनी विमर्शिका, माशब्दवाच्यं संहारं राति लाति वा तच्छीला 'रा दाने' 'ला आदाने' इत्यनयोः।।१३०-१३२।।

---

रहती है। उसी तरह यह आन्तरी वात्सल्यमयी शक्ति भी अपने ही गर्भ में पल रहे वैसर्गिक विमर्श रूपी उल्लास को अनुगृहीत करती है। इसीलिये इसे मातृका कहते हैं।

मालिनी शक्ति का कुछ दूसरा ही स्वरूप होता है। माल्यते धार्यते रुद्रैः अर्थात् जो रुद्रों द्वारा स्वात्मभाव से धारित होती है, इस विग्रह के अनुसार मालिनी कहलाती है। एक दूसरा विग्रह भी इसका होता है। 'मल मल्ल' धारण अर्थ में धातु है। उसके अनुसार भी मुक्ति मुक्ति को स्वात्म में धारण करने वाली शक्ति मालिनी संज्ञा से ही विभूषित होगी। माला शब्द फूलों की माला अर्थ में रूढ है। अवयव में भी समुदाय का औपचारिक रूप से प्रयोग होता है। इस तरह माला शब्द के कहने से पुष्प वाली का अर्थ बुद्धि में उभर आता है। अतः इसे पुष्पिणी भी कहने लगते हैं।

इस सन्दर्भ में पुष्पिणी माला पूजा के उपकरण का अर्थ भी व्यक्त करने में समर्थ होती है। जिसकी माला होती है, जो माला को धारण करती है ऐसी शक्ति अवश्य पूजनीय होती है, इसमें सन्देह नहीं। एक तीसरा दृष्टिकोण भी है। 'अल; धातु का धात्वर्थ है— भूषित होना या करना, पर्याप्त रूप से विमर्श की अधिगति और धारण। इन अर्थों के अनुसार वह अलिनी है। 'मा' का अर्थ निषेध होता है। निषेध संहाररूप होता है। संहार का विमर्श करने वाली शक्ति भी मालिनी कही जाती है।

'मा' शब्द वाच्य निषेध या संहार को 'रा' दाने और 'ला' आदाने के अनुसार यह शक्ति संहार दे भी सकती है और ले भी सकती है। विनाश बरपा कर सकती है और उसे समेट कर समाप्त भी कर सकती है। इस दृष्टि से भी यह मालिनी शक्ति होती है। इन उक्त सभी अर्थों को आत्मसात् करने वाली देवी मालिनी है।।१३०-१३२।।

ननु अनयोः पञ्चाशतोऽपि वर्णानामविशेषात्कोऽयं भेदो नाम इत्याशङ्क्य आह

**शब्दराशिर्मालिनी च शिवशक्त्यात्मकं त्विदम् ।।१३३।।**
**एकैकत्रापि पूर्णत्वाच्छिवशक्तिस्वभावता ।**

तुर्ह्यर्थे। ननु यदि एवं, तत् कथं

**'वाचकत्वेन सर्वापि शंभोः शक्तिश्च शस्यते।'** (मा. वि. २।१२)

इत्यादि उक्तमित्याशङ्क्य आह एकैकत्रापीत्यादि किंतु मालिन्यां शाक्तस्य स्वभावस्योद्रेको येनोक्तं

**'परमार्थतः सा शाक्ती तनुः'** इति।
**'कां कां सिद्धिं न वितरेत्किंवा न्यूनं न पूरयेत्'** इति च।।

---

जिज्ञासु सोचता है, दोनों में वही ५० वर्ण हैं। उन्हीं के ये इस प्रकार के भेद क्यों हैं? इस अन्तर्गर्भ प्रश्न को भाँप कर उसका उत्तर दे रहे हैं—

वस्तुतः मालिनी शिवशक्त्यात्मक शब्द राशि है। एक एक वर्ण में ही यह पूर्ण है। पूर्ण होने से इसमें शिवत्व और शक्तित्व का उभय सामरस्य शाश्वत उल्लसित है।

यहाँ 'तु' अव्यय का प्रयोग 'हि' अव्ययार्थ को व्यक्त करता है। इसीलिये शिवशक्त्यामक होने के कारण इसका एक एक वर्ण भी पूर्ण होता है। इस स्थिति में एक नई जिज्ञासा होती है। मालिनी विजयोत्तर तन्त्र ३।१२ में लिखा है कि,

"वाचक होने से शम्भु की सभी शक्तियाँ नितान्त प्रशस्य हैं"।

इसी अर्थ में श्लोक में एक एक शब्द की पूर्णता की बात कही गयी है किन्तु इसमें विशेषतः शाक्त स्वभाव का ही उद्रेक माना जाता है। इसी आधार पर कहा गया है कि,

"परमार्थतः यह परमेश्वर की शाक्त शरीर है"। तथा यह भी कहा गया है कि, यह किस किस सिद्धि का वितरण नहीं करती और किस किस अभाव को नहीं भरती"।।१३३।।

